पदस्य उत्तरपदार्थे उपसंक्रमेण षष्ठ्याद्ययोगात्। तथा च भाष्यम् "सेयंयुगपदधिकरणवचनता दुःखा च दुरुपपादा च" इति।

कालिकस्यैव समानार्थत्वस्य तत्र निमित्तत्वात्। एव चैकस्य विभक्त्यन्तस्य निवृत्तावपरस्य तद्विशिष्टस्य श्रवणमिति भावः। पक्षान्तरेऽपीति। अयं भावः—अलौकिके तत्कल्पने ऽपि प्रत्येकं सुबुत्पत्त्यनन्तरमेव तत्कल्पना, तदनन्तरमेव तत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः। एवं चान्तरङ्गत्वादुत्पन्नैकवचनत्यागेन द्विवचनाद्युत्पत्तौ मानाभाव इति। इतरपदार्थे उपसंक्रमेणेति। उपसंक्रमश्चतदालिङ्गितस्यैव स्वार्थस्योपस्थितिः। सा च विभक्त्यर्थसम्बन्धाद्यन्तर्भाविण्येवेति तस्योक्ततया तदनापत्तौ तदुच्छेद इति भावः। दुःखा चेति। वृद्धव्यवहारस्य शब्दार्थनिश्चयहेतुत्वम्। न च लक्षशब्दस्य न्यग्रोधाभिधायित्वं वृद्धव्यवहारे दृश्यते। न्यग्रोधशब्देन तल्लाभाच्च न लक्षणा ऽपि, प्लक्षन्यग्रोधा-

---

द्रव्याणामिति— वर्तिपदार्थरूपाणामित्यर्थः, मूले अजहत्स्वार्थायामिति। यत एकैकस्य स्वार्थप्रतिपादकता, समभिव्याहृतप्रातिपदिकान्तरार्थप्रतिपादकता चास्तीत्यतो अजहत्स्वार्थत्वव्यवहारः। एवञ्च द्वित्वादिविशिष्टार्थाभिधायकद्विवचनाद्युत्पत्तिर्निर्बाधैवेति भावः। तत्कल्पनादिति। प्रत्येकमनेकार्थाभिधायकत्वस्य कल्पनादित्यर्थः॥ एतत्पक्षे प्रसक्तातिप्रसङ्गं वारयति। रामकृष्णावित्यादाविति-द्वन्द्वविधानसामर्थ्येनेति। इदमुपलक्षणम्। समानार्थानामिति। विशेषणसामर्थ्यादित्यपि बोध्यम्। तत्प्राक्कालिकस्य—युगपदधिकरणत्ववचनत्वात्प्राक्कालिकस्य तत्र – वार्तिकप्रवृत्तौ निमित्तत्वादिति निमित्तत्वेनाश्रयणादित्यर्थः। मूले जहत्स्वार्थायामिति। अस्मिन्पक्षे ऽवयवानामनर्थकतया प्रत्येकन्द्विवचनाद्युत्पत्त्यसम्भवः। पक्षान्तरेपीति अजहत्स्वार्थावृत्तिपक्षेपीत्यर्थः। प्रथममेकवचनस्य प्रवृत्तौ साधकमाह अयम्भाव इत्यादिना। तत्कल्पनेपि – अनेकार्थाभिधायित्वकल्पनेपीत्यर्थः। अनन्तरम्—सुबुत्पत्त्यनन्तरम्। तत्कल्पकेति—युगपदधिकरणताकल्पकेत्यर्थः। एवञ्च सुबुत्पत्तिकाले तयोरप्रवृत्त्या कल्पकाभावेन तदभावे च अन्तरङ्गत्वम् स्वार्थमात्रसापेक्षत्वादन्तरङ्गत्वम्। तदिति। उत्तरपदार्थः। स्वार्थस्य—पूर्वपदार्थस्य तस्य। सम्बन्धस्य। तदन्तेति—षष्ठ्याद्यन्तेत्यर्थः, तदुच्छेदः—षष्ठीतत्पुरुषोच्छेदः। दुःखा—दुःखप्रदा झटिति प्रतीतावनुपारोहादोषाक्रान्तत्वाच। एतदेवाह—वृद्धव्यवहारेति। अस्य व्याकरणादिभ्यो ऽपि प्रथमप्रवृत्त्या प्राधान्यम्। ननु शक्त्यभावेपि लक्षणास्तु? इत्यत

यदपि व्याचख्युः—व्यक्तिपक्षे यावद्व्यक्ति तत्तच्छब्दप्रयोगे प्राप्ते एकस्यैव प्रयोगो यथा स्यादिति सूत्रम् । आकृतिपक्षे तु एके-

---

वित्यादौ बोधावृत्त्यननुभवाच्च । दुरुपपादा चेति । न च द्विवचनाद्यनुपपत्तिस्तदु(१)पपादिका, समासस्योद्भूतावयवभेदसमुदायाभिधानशक्तिमत्त्वाद् द्विवचनादिसिद्ध्या तदनुपपत्तेस्तदुपपादकत्वाभावात् । समुच्चयान्वाचययोः समासस्यासामर्थ्येनैव वारयिष्यमाणतया न तदापत्तिरेतदुपपादिका । न चान्यत्रोपपादयितुमशक्यत्वेऽपि एकशेषे कस्य शेष इत्यत्र विनिगमकाभावात्सर्वेषां सर्वार्थत्वमावश्यकम्, तथा सत्येकशेषस्यैव वैयर्थ्यापत्तेः । तस्मादेकशेषज्ञानोत्तरं शास्त्रवासनावतां तच्छक्तिज्ञानं न तु ततः प्रागपीति न दोषः ।

आकृत्याविनाभूतेति । नियमेनाकृतिसम्बद्धेत्यर्थः । ब्राह्मणशब्देनेवेतिभावः । नहि तत्रैकशेषः । तावद्ब्राह्मणशब्दज्ञानासम्भवात् ।

---

आह—न्यग्रोधशब्देनेति । यदि भवत्सम्मतयुगपदधिकरणवचनता स्यात्तदा बोधावृत्तिः स्यात्सापि नास्तीत्याह—प्लक्षन्यग्रोधाविति । दुरुपपादेत्यस्य—दुष्टः निःसारः उपपाद उपपादनं यस्या मित्यर्थः । तस्याप्रमाणाशङ्कां निरस्यति—नचेति । द्विवचनेनेति द्वन्द्वोत्तरद्विवचनेनेत्यर्थः । अभिधानशक्तिमत्त्वात् । अभिधानसामर्थ्यवत्वादित्यर्थः । 'ननु' समुच्चयान्वाचययोर्द्वन्द्वापत्तिरेवोपपादिका भविष्यतीत्यत आह—समुच्चयेति । नचेति । आवश्यकमित्यत्रास्यान्वयः । अन्यत्र—द्वन्द्वे, "यः शिष्यते" इति न्यायेन कस्यचित्सर्वार्थप्रतिपादनसामर्थ्यवत्त्वं वक्तव्यन्तत्र विनिगमनाविरहात् सर्वेषामेव तथात्वं वक्तव्यमिति भावः । तथासतीति । यद्येकशेषविषये तत्स्वीकारस्तदा एकेनानेकार्थबोधस्यैकशेषं विनापि सिद्धतया तद्वैयर्थ्यमिति भावः । तस्मादिति एकशेषवैयर्थ्यापत्तेरित्यर्थः, तच्छक्तीति अनेकार्थाभिधानशक्तीत्यर्थः, ततः—एकशेषात् । न दोषः । नैकशेषवैयर्थ्यापत्तिरूपदोषः । एतेन प्रागेकवचनस्योत्पत्तिर्दुर्वारेति प्रतिपादितम् ।

मूले यदपि व्याचख्युरिति । प्रसादकृत इति शेषः । एवकारसङ्गतिमुपपादयन्नाह—ब्राह्मणेति । अन्यत्रापि—रामावित्यादावपि । 'नन्वेवंसति बह्वर्थस्य

---

१ युगपदधिकरणवचनतोपपादिकेत्यर्थः । कस्याप्येक शेषेऽितरादिविशिष्टार्थबोधकत्वस्य भावित्वेन ततः प्रागपि द्विवचनादिरेव स्यादिति भावः ।

नैवाकृत्यविनाभूतानेकव्यक्तिलाभादनर्थकमिति । तन्न, व्यक्तिपक्षेऽपि "नब्राह्मणं हन्यात्" इत्यत्र ब्राह्मणशब्देनैवैकेनापि अनेकस्य तन्त्रेण सुवचत्वात । अन्यथा जातिपक्षेऽपि "वामेन सम्यक्क्षम-

---

तस्मात्तत्र जातिपक्षेण तन्त्रेण वा यथा निर्वाहस्तथान्यत्रापीति भावः । न ब्राह्मणमित्येकवचनं त्वार्षम् । तन्त्रेण सुवचत्वादिति । अयं भावः-भाष्येऽर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेवेति उक्तम् । एवं च एकेनानेकार्थबोधनमपि प्रत्यर्थमेवेति एकेनैव ब्राह्मणपदेनानेकार्थबोधनं तत्र । अन्यथाऽभ्रियमानायाः शक्तेरेकशेषशास्त्रसहस्रेणापि उपपादयितुमशक्यतया बोधानुपपत्तिरेव स्यात् । तन्त्रं (१)चात्रार्थ-

---

तन्त्रेण तत्र प्रतिपत्तिसत्त्वाद्बहुवचनापत्तिरत—आह—न ब्राह्मणमिति । नन्वेकशेषं विना कथमनेकार्थाभिधायकत्वम्, अन्यथा प्रत्यर्थं शब्दनिवेशान्नैकेनानेकार्थाभिधानमिति भाष्यविरोध इत्यत—आह—अयम्भाव इति । तत्र—"न ब्राह्मणं हन्यात्" इति दृष्टान्तस्थले । अन्यथा—अर्थावर्थावित्याद्यनङ्गीकारे, बोधेति अनेकार्थबोधेत्यर्थः । सूत्रारम्भात्सूत्रेणैकशेषेपीष्टार्थानां बोधानुपपत्तिरिति

---

१ तन्त्रत्वञ्च अत्रशास्त्रे सकृदुच्चरितस्यानेकार्थबोधपरकत्वम्, एकोच्चारणेनानेकार्थबोधनमिति यावत् । तच्च द्विविधम्:-अर्थतन्त्रम, शब्दतन्त्रञ्च । तत्र यत्र प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधेच्छा तत्रार्थतन्त्रम् । यथाः-'घटाः' इत्यादौ । अत्र हि घटत्वनिष्ठैकप्रकारतानिरूपितनानाघटनिष्ठनानाविशेष्यताकबोधो जायते, घटभेदेन विषयताया भेदादित्यर्थतन्त्रमत्र । यत्र प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यता तत्र शब्दतन्त्रम् । यथा 'अक्षाः' इत्यादौ । अत्र अक्षत्वरूपं प्रवृत्तिनिमित्तम । तच्च त्रिविधम शकटाक्षवृत्ति, देवनाक्षवृत्ति, बिभीतका ( बहेरा ) क्षवृत्ति च । आश्रयभेदेन विषयताया भेदात् नानाप्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधो जायते इति शब्दतन्त्रमत्र । तत्रेदं फलितम:-नानाप्रवृत्तिनिमित्तावच्छिन्नबोधकस्थले शब्दतन्त्रम्, एकप्रवृत्तिनिमित्तावच्छिन्न बोधकस्थलेऽर्थतन्त्रमिति । तथा च चन्द्रपर्य्यायस्य कर्पूरेन्दूभयबोधकतया 'चन्द्रौ'. 'चन्द्राः', इत्यादौ शब्दतन्त्रमेव । यत्रानेकार्थ बोधनाय शब्दपरिवर्तनं कर्तुनशक्यते तत्रार्थतन्त्रम, यत्रपरिवर्तनं कर्तुंशक्यते तत्र शब्दतन्त्रम् इति तु न युक्तम् 'घनसारश्चन्द्रसंज्ञः" ( अम. का. २ व. ६ ) इत्यमरात् । तत्र चन्द्रसंज्ञा संज्ञा यस्य स इत्यर्थः । एतेन चन्द्रशब्दस्योभयार्थकत्वेऽपि तत्पर्य्यायस्योभयार्थकत्वेमानाभाव इत्यपास्तम् । 'चन्द्राः, इत्यस्य स्थाने 'इन्दवः, इत्यस्य वक्तुं शक्यत्वात् तत्र सर्वसम्मतशब्द तन्त्रत्वभङ्गापत्तेः । यत्तु नानाफलक समानाकारक व्यापाराणां मध्ये अनेकफलोद्देशेनैकव्यापारकरणे तन्त्रमिति लोकसाधारणतन्त्रलक्षणं तन्न, विभिन्नक्रियारूपेषु यज्ञोपवीतादिसंस्कारेषु एककालावच्छेदेन कृतेषु तन्त्रत्वव्यवहारानुपपत्तेः ।

योश्च तस्मिन्" इत्यादिनानार्थानुरोधेन सूत्रं विना ऽनिर्वाहात्। तस्माज्जातिव्यक्तिपक्षयोरुभयोरपि तन्त्रेण प्रयोगान्निर्वाहेऽपि सर्वत्र तन्त्रेणैव बोधनीयमिति नियामकाभावात्पाक्षिको द्वन्द्वः सूत्रं विना दुर्वारः। घटोऽयं घटोऽयमिति नानाशब्दप्रयोगदर्शनात्, तद्वद्घटघटाविति द्वन्द्वस्य न्यायप्राप्तत्वात्। न चैवमपि घटकलशाविति द्वन्द्वापत्तिः। "विरूपाणामपि समानार्थानाम्" इति वार्तिकात्, रूप्यते बोध्यते इति व्युत्पत्त्या रूपशब्दस्य अर्थपरत्वमाश्रित्य वार्ति-

---

तन्त्रम्। एकत्रैव शब्देऽनेकार्थानां सत्त्वात्। शब्दस्य पर्यायपरिवृत्तिसहतया ऽर्थतन्त्रमेवैतत्। अक्षा इत्यादौ तु तदसहतया शब्दतन्त्रमेव। अन्यथा-तन्त्रानङ्गीकारे। क्षमाशब्दः क्षान्तिभूम्योर्वाचकः। नानार्थानुरोधेनेति। सूत्रमावश्यकं तत्रेति शेषः। न्यायप्राप्तत्वादिति। अनभिधानमाश्रित्य तु भाष्ये पक्षद्वये ऽपि सूत्रं प्रत्याख्यानमित्यन्यत्। अनेकघटादिपदानां चार्थे वृत्तिरेव ना(१)नभिधानादिति द्वन्द्वाप्रा-

---

भावः। तन्त्रस्य द्वौ भेदौ शास्त्रप्रसिद्धौ अर्थतन्त्रम् शब्दतन्त्रञ्चेति तत्राद्यमाह—अत्रार्थतन्त्रमिति। अत्र "न ब्राह्मणं हन्यादित्यादिघटकब्राह्मणादिशब्दे सकृदुच्चरितस्यानेकार्थपरत्वं यत्र तत्र तन्त्रव्यवहारः यात्रार्थानामभेदेपि शब्दैक्यन्तत्र ताल्वोष्ठपुटादिव्यापारप्रकाशितैकशब्देनैकवृन्तगतानेकपुष्पफलन्यायेनानेकार्थसंबन्धेनैकशब्देनानेकार्थबोधादर्थतन्त्रमिति व्यवहारः। एतदेवाह—एकत्रैकेति। अस्य लक्षणमाह—शब्दस्येति। पर्यायपरिवृत्तीति। पर्यायेण पर्यायवाचकेन परिवृत्तिरनेकार्थस्य प्रकाशनन्तत्सहत्वमित्यर्थः, स्वप्रयोगाभावेपि स्वबोध्ययावदर्थबोधकस्वपर्यायकत्वमर्थतन्त्रत्वम् अस्ति चेदम्ब्राह्मणादिशब्दे ब्राह्मणशब्दस्य प्रयोगाभावेपि तद्बोध्यानाम्बोधनाय विप्रशब्दस्य प्रयोगदर्शनात्। द्वितीयमाह-अक्षा-इत्यादाविति। अत्राक्षशब्दो देवनाक्षरथाक्षबिभीतकक्षानाम्प्रतिपादकस्तावतामन्येनाप्रतिपादनादिति भावः। प्रातिपदिकतन्त्रादयो ऽन्ये तन्त्रा अनयोरेवान्यत्र प्रतिपादिताः। तत्र क्षमयोरित्यत्र उभयवृत्त्येकजातेरत्राभावेन तन्त्रानङ्गीकारे जातिप्रकारकानेकार्थविशेष्यकप्रतीतिरत्र न सम्भवतीति बोध्यम्। उक्तरीत्या सूत्रकाराशयमुपवर्ण्य भाष्यविरोधम्परिहरति-अनभिधानमिति। पक्षद्वयेपीति।

---

१ अभिधानं शब्दप्रयोगः। तत्रार्थे तस्य प्रयोगाभावादित्यर्थः।

कार्थस्यापि सूत्रेणैव क्रोडीकाराच्च। तस्माद्घटघटौ घटकलशावित्या-
दिपाक्षिकानिष्टवारणाय पक्षद्वये ऽपि सूत्रमावश्यकमित्यवधेयम्।

एवं स्थिते सूत्रवैयर्थ्यमेव हृदि निधाय यदिह व्याचख्युः—
नानेनैकशेषो विधीयते इत्यादि। यच्च समुदायादेकस्यां विभक्ता-

---

विरेवेति तदाशयः। आवश्यकमिति। अनभिधानाज्ञाने इति शेषः।

नानेनैकशेषो विधीयते इति। "किं तु न्यायसिद्ध एवानूद्यते" इति
एतच्छेषस्तद्ग्रन्थे। प्रयुक्तानामिति। अयं भावः—वृध्यादिप्रवृत्तावेक-
शेषशास्त्राप्रवृत्त्या नित्यविद्ध्युद्देश्यतावच्छेदकानाक्रान्तत्वेन तदेव
परिनिष्ठितं स्यात्तच्च न लोके प्रयुज्यते प्रयुक्तानां चेदमन्वाख्यानमिति

---

जातिपक्षे व्यक्तिपक्षेचेत्यर्थः। व्यक्तेर्वाच्यत्वमते ऽप्यर्थावर्थावित्याश्रयणेनैकस्याने-
कार्थत्वमप्यभिधानस्वाभाव्यादिति तद्भावः। नच प्रत्येकव्यक्तेः शब्दप्रतिपाद्यत्व-
विवक्षायान्द्वन्द्वापत्तिवारणाय सूत्रमस्त्विति वाच्यम्, चार्थ इत्यस्य सूत्रस्य येषाञ्चार्थे
वृत्तिस्तेषां संज्ञाविधायकत्वञ्चार्थः समूहः सच भिन्नानामेव, भेदश्च क्वचित्पदार्थानां
स्वतः सिद्ध एव, क्वचित्तु पदार्थतावच्छेदककृत इति घटशब्देनैकेनैव, प्रतिपादन-
न्नतु पदार्थानाम्भेदात्साहित्यस्य प्रतीतिरित्याशयात् एतदेवाह—अनेकेति। ननूक्त-
रीत्या चार्थवृत्तित्वाभावेनैव पाक्षिकानिष्टवारणे सिद्धे आवश्यकमित्यनुपपन्नमत-
आह—अनभिधानाज्ञान इति। मूले सूत्रवैयर्थ्यमेव हृदि निधायेति अयम्भावः
यद्येकार्थाभिनिवेशित्वमेव शब्दानान्तर्हि कृतेप्येकशेषे नानेकाभिधानं, शिष्यमाणे-
नैकेन वचनेनासत्याः शक्तेर्वक्तुमशक्यत्वात्।

यदि स्वभावादनेकार्थाभिधायकत्वं सिद्धमेव तदा सूत्रम्मास्तु एकेनानेकव्य-
क्तिप्रतिपादनसम्भवादिति। इत्यादीत्येतावन्मात्रमधिकसाकाङ्क्षमत—आह—
किन्त्विति। एतच्चार्थत उपनिबद्धम्, तदीयग्रन्थानुपूर्वीतु किन्तु वृत्तिविषये
एकस्याप्यनेकार्थाभिधानशक्तिरस्तीति ज्ञाप्यत इति। मूले आहुरिति। प्रसाद-
कृते इति शेषः। ननु लौकिकमिति एकशेषस्य नित्यतया तादृशप्रयोगासम्भवादिति
भावः। शास्त्राप्रवृत्त्येति। वैरूप्यादित्यादिः तावदेव—रामरामावित्येतावदेव,
तत्प्रक्रियावाक्ये—एकशेषस्य प्रक्रियावाक्ये, सन्दर्भविरोधमुपपादयति—एक-
स्यैवेति। इति सूत्रमिति। एतेन समुदायादेकविभक्तिम्प्रदर्श्य सूत्रस्य स्थाप-
नम्प्रदर्शितन्ततः प्रत्याख्यानप्रकारः समुदायादित्यादि दर्शितः इदं स्वभावतो विरु-
द्धम्, यदि प्रत्याख्यानः कारस्यैव स्वाभिमतत्वन्तदा समुदायादेकविभक्तिप्रदर्शना-

विति पक्षं प्रत्याख्याय पुनराहुः। राम राम औ इति स्थिते इति। अलौकिकमेतत्प्रक्रियावाक्यमूह्यते न तु लौकिकम्। अलौकिके च विभक्त्येकादेशादिकार्यं न प्रवर्तते। प्रयुक्तानामेवान्वाख्यानादित्यादि। तत्सर्वं सन्दर्भविरुद्धं न्यायविरुद्धं च। प्रयुक्तानेव ह्यन्वाख्यातुमलौ-

---

न तत्प्रक्रियावाक्ये वृद्ध्यादिप्राप्तिरिति। सन्दर्भविरुद्धमिति। एकस्यैव प्रयोगो यथा स्यादिति सूत्रमिति, समुदायादेकविभक्ताविति पक्षः प्रत्याख्यात इति च सन्दर्भ इत्यर्थः। न्यायविरोधमाह—प्रयुक्तानेवेति। न च यद्यादृशशास्त्रीयकार्यप्रवृत्त्या परिनिष्ठितं सल्लोके प्रयोगार्हं कल्पिते तदीयालौकिके तच्छास्त्रप्रवृत्तावपि अत्र वृद्ध्यादिप्रसक्तिर्नोचिता वैष(१)म्यादिति वाच्यम्। कृतद्वन्द्वानामेकशेष इति पक्षे नावौ अनड्वाहावित्यादौ परत्वादिना आवादौ कृते एकशेषानापत्तेरिति दूषणदानपरभाष्यवार्तिकास(२)ङ्गत्यापत्तेरित्यलम्।

---

सङ्गतिस्तस्या एव युक्तत्वे प्रत्याख्यात इत्ययुक्तमिति भावः। अत्र प्रयुक्तानेवेत्यादिना यन्न्यायविरुद्धत्वस्य मूलं प्रदर्शनन्तदेव विरुद्धम्। परिनिष्ठितं हि द्विविधम् प्रक्रियावाक्यरूपम् लौकिकञ्चेति, तत्र प्रक्रियावाक्ये सन्धिकार्यन्न प्रवर्तते! तावन्मात्रस्यैव प्रयोगार्हता स्यादिति रत्नाकरोक्तिं खण्डयति-नेत्यादिना। वैषम्यादिति। अत्र वृद्धिप्रवृत्तौ नावदेवोक्तरीत्या परिनिष्ठित चेत्स्यात्तच्च न लोके प्रयुज्यत इति भावः। भाष्यवार्तिकेति। यद्यपि भाष्ये नावावनड्वाहाविति कण्ठरवेण नोक्तम् किन्तु ऋक्च ऋक्च ऋचौ समासान्ते कृते असारूप्यादेकशेषो न प्राप्नोतीत्येवाभिहितम्। तथापि तदुत्तरग्रन्थे "अङ्गाश्रये चैकशेषवचनम्" इति वार्तिकव्याख्यानावसरे कैयटेनेत्थमभिहितम्. अङ्गाश्रयकार्यञ्च भाष्ये दर्शितं, स्वसा च स्वसारौ च स्वसार इत्यनेन तत्र कैयटः, अङ्गाश्रये चेति चशब्दादनङ्गाश्रयेऽपि यथा नौश्च नावौ चेति प्राह परत्वादिनेत्यादिना। अन्तरङ्गत्वेन ऋचावित्यत्र समासान्तस्य प्रवृत्तिर्दर्शिता। असङ्गत्यापत्तेरिति। अलौकिके प्रक्रियावाक्ये शास्त्रीयपरिनिष्ठितत्वप्रयोजकं शास्त्रन्न प्रवर्तते इति भवन्मतन्तच्चोक्तभाष्यवार्ति-

१ वृद्धिप्रवृत्तावेकशेषाभावेन लोके प्रयोगार्हत्वाभावादित्यर्थः।

२ यादृशशास्त्रप्रवृत्त्या लोके प्रयोगयोग्यता तदेव शास्त्रं कल्पिते प्रक्रियावाक्ये प्रवर्तते इति भवन्मतस्वीकारे 'आवादौ कृते एकशेषानापत्तिः, इति भाष्यविरोधः स्यात्, आवाद्यादेशस्यैकशेषप्रतिबन्धद्वारा लोके प्रयोगार्हत्वे प्रतिबन्धकत्वेना प्राप्तेरिति भावः।

किकमुत्प्रेक्ष्यते। शास्त्रीयकार्यं च सर्वमलौकिकेष्वेव प्रवर्तते न तु परिनिष्ठिते। "प्रथमयोः पूर्वसवर्णः" इत्यादीनां प्रवृत्तिं विना परिनिष्ठितरूपालाभात्। परिनिष्ठिते तत्प्रवृत्तेर्दुरुपपादत्वाच्चेत्यास्ता-न्तावत्।

"अमि पूर्वः" ॥ अम्यचीति। अमि योऽच् तस्मिन्। अमो ऽवयवेऽचीति यावत्। तेन मकारसहितस्य न (१) पूर्वरूपम्। एवं

---

अमि योऽजिति। अवयविन आधारत्वविवक्षायां वृत्ते शाखेतिव-त्सप्तमी तदाह-अमो ऽवयवे ऽचीति। "पूर्वपरयोः" इत्यधिकृतपरशब्देन

---

काभ्याङ्कैयटीयव्याख्यानेन च विरुद्धमिति भावः। अलमिति। एतेन यथा ऽनेक-व्यक्तिप्रतिपादनायानेकप्रातिपदिकस्य प्रयोगे प्राप्ते एकस्यैव यथा स्यादित्येवमर्थमस्य सूत्रस्यारम्भ इति प्रातिपदिकेषु सूत्रस्य प्रवृत्तिर्भवति, तथा धातुषु न भवति। एकनिष्ठानामनेकव्यापाराणामिवानेकनिष्ठानामपि व्यापाराणामेकधातुत एव निवृत्तभेदानामप्रतीत्या ऽनेकधातुप्रयोगस्याप्रसक्तेः। तदुक्तम्भाष्ये न तिङन्तान्येकशे-षारम्भम्प्रयोजयन्ति यथा जातीयकानान्द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति तथा जातीयकानामेकशेषः नच तिङन्तानान्द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति किङ्कारणम् एका हि क्रिया एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवित-व्यमुक्तार्था नामप्रयोग इति। अत्र कैयटः यथा जातीयकानाम् सत्त्ववाचिनाम् एका हीति आख्यातवाच्या क्रिया सर्वैव निवृत्तभेदा प्रतीयत इति एकश्च एकश्च द्वौ च द्वौ चेत्यत्रानभिधानान्नैकशेषः। विंशतिश्च विंशतिश्चेत्येवं सहविवक्षायां विंशती इति त्विष्टमेव। तदुक्तम्भाष्ये 'इह कस्मान्न भवति एकश्च एकश्च द्वौ च द्वौ चेति," एवमाशङ्क्य सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्च नैकशेषः, न ह्येका-वित्यनेनार्थो गम्यते अन्यपदार्थत्वाच्च संख्याया एकशेषो न भविष्यति एकश्च एक-श्चेत्यस्य द्वावित्यर्थः। द्वौ च द्वौ चेत्यस्य चत्वार इत्यर्थः। वाचकशब्दान्तरसत्ता-विशिष्टार्थासम्प्रत्ययेनैकादि आदशानामेकशेषो न। विंशत्यादीनान्तु भवत्येवेति

---

१ अवयविनोऽधिकरणत्वविवक्षया सप्तमी। यद्वा अम्शब्दस्यावयवे लक्षणा। अम् प्रत्ययेन तदादेरुपस्थितिः। तथा च तदवयववाचकः, अमवयवेऽचिपरे पूर्वपरयोः स्थाने पूर्वरूप-मित्यर्थः। तेन न पूर्वपरसमुदायस्यादेशः। नापि वासुदेववाचकाशब्दादमि 'अम्' इति जाते तस्मिन्परे 'हे राम अम' इत्यत्र पूर्वरूपम्, अम्निरूपिततदादेरकोऽभावात्। रूपान्ततदादे रित्यर्थस्तु न पूर्वसमुदायस्यादेशप्रसङ्गात्।

अक्षादूहिन्यामित्यादावपि ऊहिन्यां योऽच् तस्मान्नित्यादि(१)बोध्यम्। "इको यणचि" इत्यज्ग्रहणस्यानुवृत्तेर्निर्विवादत्वात्। "पदास्वैरि-बाह्या–" इत्यादिनिर्देशाश्चेह लिङ्गम्।

**"तस्माच्छसः"।** तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते। शस इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते।

---

विशेष्यत्वादजेव गृह्यते बोध्यम्। निर्विवादत्वादिति। उत्तरत्रानुवृत्तेः सत्त्वादिति भावः लिङ्गमिति। अनुवृत्तावनुवृत्तस्य विशेष्यत्वे चेत्यर्थः।

---

तात्पर्यार्थः। अर्थासम्प्रत्ययादित्यस्य यत्रैकः शब्दोऽनेकमर्थमभिधातुं शक्नोति तत्रैकशेषो नान्यत्र। प्रयुक्तानामन्वाख्यानारम्भात् एकावित्युक्ते असहायादिरर्थो गम्यते नतु द्वावित्यत्र तात्पर्यम्। ततोऽर्थासंप्रत्ययेऽपि गार्ग्यश्च गार्ग्यायणश्च गार्ग्याविति, अक्षश्च अक्षश्च अक्षौ इत्यत्रैकशेषो दृश्यत इत्यभिप्रायेण पूर्वोक्तौ पृथक् परिहारौ नोपपद्येते, इत्याशयेन शङ्काङ्कृत्वा एवन्तर्हि 'नेमौ परिहारौ" एकपरिहारोयं संख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चेति यत्र ह्यर्थासम्प्रत्यय एव वा अन्यपदार्थतैव वा भवति, तत्रैकशेषः। गार्ग्यौ विंशती इति यथेति, भाष्यीयप्रघट्टकार्थो ध्वनितः।

'नन्वचोऽमवयवत्वादमि योजित्यनुपपन्नमत आह—अवयविन इति। उत्तरत्र सम्प्रसारणाच्च अवङ् स्फोटायनस्येत्यनयोः। अनुवृत्तेः–अत्र प्रकरणेऽनुवृत्तौ। नन्वग्रेऽनुवृत्तिरस्तीति चेन्मध्येऽपि सम्बन्धो भविष्यत्येव, पुनस्तत्र ज्ञापकोपन्यासवैयर्थ्यमत आह-अनुवृत्तस्येति। भाष्ये इति। तत्र हि गामिच्छति गव्यतीत्यत्र प्रत्ययलक्षणेन 'औतोऽम्शसोः, इत्यात्वमाशङ्क्यानल्विधाविति वचनान्न भवतीत्युक्तम्। अज्ग्रहणानुवृत्त्यभावे "अनल्विधौ" इति निषेधाप्राप्त्या तदसङ्गतिः स्पष्टैव। प्रथमयोरित्यतः पूर्वसवर्णग्रहणानुवृत्त्यैव सिद्धे पूर्वग्रहणं राममित्यादौ द्विमात्रादेशव्यावृत्त्यर्थं। यत्तु पूर्वग्रहणानुवृत्त्यैव सिद्धे पूर्वग्रहणमेकादेशे कृते राममित्यत्र सुपि चेति दीर्घो माभूदिति। तन्न। पूर्वान्तवद्भावेनाकारान्ते सुप् यस्माद्विधीयतेत्यस्य सद्भावेऽपि मकारमात्रे सुप्त्वाभावात्। एकदेशविकृतन्यायस्यार्द्धाधिकविकारेऽप्रवृत्तेः। नापि स्थानिवद्भावेनानुमानिकादेशकल्पनया

१ न चैवमूहिनीति समुदायस्य वृद्धिविधानेऽपि अक्षेतसमुदायस्य वृद्ध्यापत्तिः, अक्षस्य अः अक्षस्तस्मादिति व्याख्याने नादोषात्। शकन्ध्वादित्वात्पररूपम्। यद्वा 'अक्षात्' इतिषष्ठ्यर्थे पञ्चमी। "आद्गुणः, इत्यतः 'आत्' इत्यनुवर्तते इति दोषभावः।

पूर्वसवर्णदीर्घात्(१)परस्य शसो ऽवयवस्येति । तदेतदाह—**परो यः शसः सकार इति** । परो यः शस् इति तु नोक्तम्, असंभवात् । न हि कृते पूर्वसवर्णदीर्घे परः शस् संभवति ।

**"अट्कुप्वाङ्"** ॥ **रषाभ्यामिति** पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम् । अत्र सर्वैर्व्यवायोऽसंभवी, एकैकमात्रव्यवाय इत्यपि नार्थः । क्षुभ्नादिषु क्षुभ्नशब्दपाठसामर्थ्यात्, "सरूपाणाम्" इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह—**व्यस्तैर्यथासम्भवं मिलितैश्चेति** । नन्वेवं आदर्शेनेत्यादौ अतिप्रसङ्गः । न च अडादिभिरेव व्यवधाने इति नियमः । अप्राप्ते विधिरयमित्युक्तत्वात् ।

---

स्पष्टं चेदम् "औतोऽम् शसोः" इत्युपक्रम्य प्रत्ययलक्षणसूत्रे भाष्ये ।

अवयवषष्ठीति । अवयवावयविभावसम्बन्धबोधिका षष्ठीत्यर्थः ।

---

तत्त्वम्, अमः स्थानित्वाभावात् । अअमित्यस्य स्थानित्वकल्पने तु सुप्त्वस्य स्थान्यवृत्तित्वं स्पष्टमेव ।

अवयवषष्ठीत्यस्यावयवत्वरूपसम्बन्धार्थिकाषष्ठीत्यर्थो वाच्यः । स च न सम्भवति । सम्बन्धस्योभयनिष्ठत्वस्वभावतयाऽवयवत्वस्यैकमात्रसम्बन्धित्वेन सम्बन्धत्वस्य वक्तुमशक्यत्वात् । यद्यप्यवयविन्यपि निरूपकत्वात्मकस्तदीयः सम्बन्धोऽस्ति, तथापि स वृत्त्यनियामक इत्याशयेनाह—**अवयवाऽवयविभावेति** । अवयवत्वावयवित्वसमूहः सम्बन्ध इत्यर्थः । एवमेव स्वस्वामिभावादिस्थलेऽपि बोध्यम् ।

प्रकृतसूत्रे नुम्ग्रहणं तद्व्यवधानेपि णत्वार्थं कृतं यद्येकव्यवधान इत्यर्थः स्यात्तदा यत्र नुमा व्यवधानं तत्रैकमात्रव्यवायाभावेन तस्य वैयर्थ्यापत्तिरतस्तस्यैव ज्ञापकत्वसम्भवे निर्देशपर्यन्तानुधावनफलमत आह—**नुमिति** । एवञ्च मूले प्राचामनुरोधेन तथोक्तमिति भावः । नच नुम्ग्रहणस्यानावश्यकतया तस्य ज्ञापकत्वेन सम्भवतीति वाच्यम् । सूत्रार्थनिर्णयावसरे तत्प्रत्याख्यानानवसरात् ।

१ पूर्वसवर्णदीर्घादिति शस एव विशेषणम्, तेन 'गाः पश्य' इत्यादौ न दोषः ।

२ 'अचि' इत्यनुवृत्तानि तस्य विशेषणत्वे अजादावित्यर्थः स्यादिति दोष तादवस्थ्यमत आह-तस्य विशेष्यत्व इति ।

सत्यम् । योगविभागोऽत्र बोध्यः । "व्यवायेऽपि" इत्येको योगो विध्यर्थः । "अट्कुप्वाङ्नुम्" इत्यन्यो नियमार्थः । छान्दसो भिसो लुक् । निषेधं बाधितुमिति । तेन पर्याणद्धमित्यत्र "उपसर्गादसमासेऽपि" इति णत्वं सिध्यतीति भावः । नुम्ग्रहणमिति । तत्स्थानिकस्य स्वाभाविकस्य चानुस्वारमात्रस्योपलक्षणमित्यर्थः ।

---

निर्देशाच्चेति । नुम्ग्रहणाच्चेत्यपि बोद्धयम् । नियमार्थ (१) इति । स च साजात्यादाक्षरसमाम्नायिकविषयकः । अतो नृणामित्यादावृत्त

---

सच = नियमश्चेत्यर्थः, उत्तराऽभागेनेति । एतच्चाऽभागमात्रोपलक्षणम्, सर्वतोऽभागस्य सत्वादत एव प्रातरू तमित्यत्र रोरीति लोपे न । णत्वसिध्या—ऋकारावयवरेफात्परत्वेन णत्वस्य सिध्या—अत एवाह—इदमिति । आदर्शेनेत्यादौ णत्वाप्रवृत्तिर्योगविभागाभावेऽपि भविष्यतीत्याशयेनाशङ्कते—यद्यपीत्यादिना । ध्वनितमिति । णत्वे ऽन्यव्यवाये प्रतिषेधो वक्तव्यः नवा

---

१ वस्तुतस्तु 'आदर्शेन' इत्यत्र नियमेन णत्ववारणमशक्यम् । तथाहि:-द्विधाहि नियमशास्त्राणां प्रवृत्तिः । विधिमुखेन, निषेधमुखेन च । तत्राद्यपक्षे नियामकशास्त्रीयोद्देश्य तावच्छेदकव्यापकम्, नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपम्, तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नं संकोचं कृत्वा नियामकशास्त्रेण कार्य्यविधानम् । द्वितीयपक्षे हि नियामकशास्त्रीयोद्देश्यताप्रयोजकपदस्य स्वार्थभिन्नं यन्नियम्यशास्त्रीयोद्देश्यतावच्छेदक व्याप्यनियामकशास्त्रीयोद्देश्यतावच्छेदक व्यापक रूपावच्छिन्नतम्, तत्रलक्षणां कृत्वा नञोऽध्याहारेण नियामकशास्त्रेण प्राप्तकार्य्यस्यनिषेधः । यथा प्रकृते नियम्यशास्त्रम् "व्यवाये" इति । तदीयोद्देश्यतावच्छेदकम् रेफषकारोत्तरत्वविशिष्टयत्किञ्चिद् व्यवहित नत्वम् नियामकम् "अट्कुप्वाङ्नुम" इति । तदीयोद्देश्यतावच्छेदकम् रेफषकारोत्तराडादिव्यवाय विशिष्टनत्वम् । तत्ररेफषकारोत्तरत्व विशिष्टयत्किञ्चिद् व्यवहित नत्वावच्छिन्ने नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यम्, नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकंयद् रेफषकारोत्तराक्षरसमाम्नायिकवर्णकर्तृकव्यवधान विशिष्टनत्वंतदवच्छिन्नाति रिक्तत्वेन संकोचे रेफषकारोत्तरम, यत्किञ्चित्कर्तृकव्यवधान विशिष्टम्, आक्षरसमाम्नायिकवर्णकर्तृकव्यवधानविशिष्टनत्वावच्छिन्न भिन्नं यन्नत्वावच्छिन्नं तस्य णत्वम्, इत्यर्थकनियम्यशास्त्रस्य 'आदर्शेन' इत्यत्र प्रवृत्त्यभावेऽपि 'अडादिकर्तृकव्यवधान विशिष्टरेफषकारोत्तरनस्यणत्वम्' इत्यर्थकस्य "अट्कुप्वाङ्नुम्" इतिनियामकशास्त्रस्यप्रवृत्तिदुर्वारैव । निषेधमुखेन प्रवृत्तिपक्षेऽपि 'अडादिकर्तृकव्यवधानविशिष्ट रेफषकारोत्तरनत्वावच्छिन्न भिन्नं यत्तादृशमाक्षरसमाम्नायिक वर्णकर्तृकव्यवधान विशिष्टनत्वावच्छिन्नं तस्यणत्वंन भवति' इत्यर्थकतया आक्षरसमाम्नायिक वर्णकर्तृकव्यवधान-

तेन "बृहि वृद्धौ" इदित्वान्नुम् । तस्यानुस्वारः । "तृंहू हिंसायां" स्वाभाविकोऽत्रानुस्वारः । बृंहणम्, तृंहणम् । उभयत्रापि णत्वं सिद्धम् । "इवि प्रीणने" प्रेन्वनम् । इह "कृत्यचः" "इजादेः

---

राज्भागेन व्यवधानेऽपि णत्वसिद्ध्या "ऋवर्णान्नस्य" इति वचनं न कार्यमिति भावः । इदं प्रत्याहाराह्निके प्रकृतसूत्रे च भाष्ये स्पष्टम् । यद्यपि "रषाभ्याम्" इति पञ्चम्योपस्थितनिर्दिष्टपदस्य "व्यवाये"

---

ऽन्येन व्यवेतत्वादिति ग्रन्थेन ध्वनितमित्यर्थः । तत्र = रषाभ्यामिति सूत्रे, इदमेव = योगविभागेन नियमत्वमेव, यथोत्तरम्मुनीनां प्रामाण्यात्तत्खण्डनाय प्रवृत्तेश्च । उक्तनियमं विनोक्तसादृश्यस्यालाभः स्यात् । 'ननु स्वाभाविकोऽनुस्वारो

विशिष्टनत्वावच्छिन्न भिन्नत्वाभावात् 'आदर्शेन' इत्यत्र निषेधा प्राप्त्या "व्यनावेऽपि" इति णत्वापत्तिस्तदवस्थैव । तस्मात् "तुशर्व्यवायेन" इति न्यासेनैवसिद्धे "अट्कुप्वाङ्नुम्" इति गुरुभूतन्यासकरणसामर्थ्यात् 'अडादिभिरेवव्यवायेणत्वम्' इतिभाष्योक्तदिशा 'आदर्शेन' इत्यत्र णत्वापत्तिः परिहरणीया । अतएव "रषाभ्याम्" (पा. सू. ८-४-१) इति सूत्रभाष्ये 'मातृणाम' इत्यादौणत्वार्थं कृतस्य वार्तिकस्य प्रत्याख्यानाय "एवं तर्हि योगविभागः करिष्यते । रषाभ्यांनोणः समानपदे । ततः "व्यवाये" व्यवाये च रषाभ्यां नोणोभवति । ततः "अट्कुप्वाङ्नुम्भिरिति । इदमिदानीं किमर्थम । नियमार्थम् । एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति ।" इतिनियमेन "ऋवर्णान्नस्य" इति वार्तिकं प्रत्याख्याय "अट्कुप्वाङ्नुम" इति सूत्र भाष्ये "अड्व्यवायेणत्वेऽन्यव्यवाये प्रतिषेधोवक्तव्यः । आदर्शेन, अक्षदर्शनेन । नवाऽन्येनव्यवेतत्वात् । नवावक्तव्यम् । किंकारणम् ? अन्येन व्यवेतत्वात् । अन्येनात्रव्यवायः । यद्यप्यन्येनात्रव्यवायः । अटापितु अस्तिमवायः । तत्र "अड्व्यवाय" इति प्राप्नोति । अटैवव्यवायेभवति । किंवक्तव्यमेतत् । नहि । कथमनुच्यमानंगंस्यते । अड्ग्रहणसामर्थ्यात् । यदि चाटा चान्येन च व्यवायेस्यादड्ग्रहण मनर्थकं स्यात् । "व्यवायेनाणोभवति" इत्येवब्रूयात् । अस्त्यन्यदड्ग्रहणस्य प्रयोजनम् । किम् ? यं ऽनिर्दिष्टेरेवव्यवायः तत्रमाभूत् 'कृत्स्नम्' 'मृत्स्ना' इति । पक्षे तावत्प्रयोजनंस्यात् । शर्व्यवायेनेत्येव ब्रूयात् इत्युक्तम् । अत्रभाष्ये "शर्व्यवायेन" इति "तुशर्व्यवायेन" इत्यस्योप लक्षणम् । तथा च 'आध्योत्' इयादौ न दोषः । एवञ्च नियमेनैव 'आदर्शेन इत्यादौ यदि णत्ववारणं स्यात्तदा "अटाव्यवायेणत्वेऽन्यन्मवाये प्रतिषेधोवक्तव्यः इति वार्तिकोत्थानम्, अडादिग्रहणसामर्थ्या तत्प्रत्याख्यानञ्चासङ्गतंस्यात्, नियमेनैवतत्रदोषा प्राप्तेः । शेखरकृतातु 'तस्मात्' इति परिभाषया अव्यवहितपरत्वस्य 'अटकुप्वाङ्' इति श्रुत्या अडादिव्यवहितत्वचोपस्थितयोभयो र्विरोधेन लक्षणया अडादिपदस्याडादिव्यतिरिक्तव्यवधानशून्य परत्वमाश्रित्यः 'आदर्शेन' इत्यादौ दूषणं परिहृतं भाष्यञ्चैकदेश्युक्तिरित्युक्तम् ।

सनुमः" इति णत्वं न। यथा "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति विधौ नक्षत्रदर्शनस्य कालविशेषोपलक्षणत्वात्सत्यपि दिवा नक्षत्रदर्शने वाङ् न विसृज्यते, उपलक्षितस्य कालविशेषस्याभावात्। रात्रौ असत्यपि नक्षत्रदर्शने विसृज्यते तस्य सत्त्वात्। तथेहापि बोध्यम्। नन्वेवं नुम्ग्रहणं व्यर्थम् अनुस्वारस्याट्त्वेनैव संग्रहात्। उरः केणेत्यादौ विसर्गजिह्वामूलीयादिव्यवधाने ह्यषैव गातिरिति

---

इत्यनेनाविरोधायाडाद्यतिरिक्ताव्यवहितपरतया ऽऽदर्शनेत्यादौ णत्वं सुशक( १ ) वारणम्। ध्वनितं चेदं प्रकृतसूत्रे वार्त्तिककृता, तथाऽपि तत्र नृणामित्यर्थं वचनारम्भे गौरवमितीदमेवादृतं मूलकृता। स्वाभाविकस्येति। तद्भिन्नस्थानिकस्य पाणिन्युच्चारितस्येत्यर्थः। तृंहू इत्यादेरपि "नकारजावनुस्वार" इति वृद्धोक्तेर्नस्थानिकत्वात्, अत एव तृंहू इत्यस्य नलोपे तृढ इत्यस्य सिद्धिः। इवि प्रीणने इति। हिविदिवीतिदण्डकपठितस्येदं निष्कृष्य ग्रहणम्। प्रेन्वनमित्यादौ नुमो नस्य क्षुभ्नादित्वाण्णत्वाभावः। इति दिगिति। तद्वदत्र तु न वक्तुं शक्यं तृंहू इत्यस्य तृंहणमित्यसिद्धेः स्पष्टं चेदं भाष्ये।

दुर्लभः, "नकारजावनुस्वारपञ्चमौ" इति वृद्धोक्तेरत—आह—तद्भिन्नस्थानिकेति। 'नन्वेवमपि स्वाभाविकत्वमनुपपन्नमेव नुम्भिन्नस्थानिकस्यापि लक्षणवशसम्पन्नत्वादत—आह—पाणिनीति। एतेन स्वस्य पाणिनेराभावः उच्चारणं स यत्रास्तीति व्युत्पत्तिर्ध्वनिता। एतादृशव्याख्याने बीजमाह—तृंहू इत्यादेरिति। वृद्धोक्तेरावश्यकत्वमाह—अत एवेति। नकारस्थानिकत्वादेव, इवि प्रीणने इत्येवम्पाठाभावादाह—हिवीति। पठितस्येति—माधवादिभिरिति शेषः। एतेन स्वमते इवि व्याप्ताविति पाठेऽपि न क्षतिः। दिगर्थमाह—तद्वदिति—नुम्विसर्जनीयेतिसूत्रस्थनुम्ग्रहणवदेतत्सूत्रस्थनुमित्यर्थः। असिद्धेरिति—यदि नुम्स्थानिके लक्षणा स्यात्तदा तृंहणमित्यत्र नुम्स्थानिकानुस्वाराभावाण्णत्वस्य

---

वस्तुतस्तु शेखरकारोक्तमसङ्गतमेव 'तस्मात्' इति परिभाषया अव्यवहितत्वम्, परत्वम्, षष्ठ्यर्थश्चेत्यंशत्रयमुपस्थाप्यते। परन्तु यत्रयदंशो बाधितोभवति तत्र तदंशानुपस्थितिरेवेति प्रकृते व्यवाय इत्यनेन विरोधादव्यवहितांशानुपस्थितौ 'आदर्शेन' इत्यत्रणत्वस्याशक्यवारणत्वात्, अडाद्यतिरिक्ताक्षरसमाम्नायिकवर्णव्यवधानशून्यस्यणत्वविधाने 'रषाभ्याम्' इति सूत्रस्यवैयर्थ्यापत्तेश्चे त्यन्यत्र विस्तरः।

चेत्सत्यमित्याह—तच्चेति । स्यादेतत् । उक्तरीत्या "नुम्विसर्जनीय" इति सूत्रेऽपि नुम्ग्रहणं त्याज्यं स्यात् । तत्राप्यनुस्वारस्य लक्षणीयत्वात् । अन्यथा ऽसंभवात् । न हि षत्वप्रवृत्तिवेलायां सर्पींषीत्यादौ नुम् लभ्यते । षत्वस्यासिद्धत्वेन ततः प्रागेवानुस्वारप्रवृत्तेः । यद्यपि सुहिन्सु इत्यत्र संभवत्येव, तथाऽपि तत्रैवातिव्याप्तिं वारयितुं लक्ष्यानुरोधान्नुम्स्थानिकेऽनुस्वारे लक्षणाऽऽश्रयणीयैव, व्याख्यानात् । तस्य च शर्त्वेन तद्व्यवाये षत्वस्य सिद्धत्वादिति चेत् । मैवम् । उक्तरीत्या तत्रत्यविसर्गग्रहणस्य प्रत्याख्यानसंभवेऽपि नियमार्थं नुम्ग्रहणम् । तथा हि—अनुस्वारेण व्यवधाने चेत् षत्वं तर्हि नुम्स्थानिकेनैवेति नियम्यते तेन पुंस्वित्यादौ षत्वं नेति दिक् ।

"यस्मात्प्रत्ययविधिः" ॥ अत्र प्राचोक्तम्—यस्माद्धातोः प्रातिपदिकाद्वेति । तन्न । तिङन्तादीनामपि तरबादिकं प्रत्यङ्गत्वात् । सङ्कोचस्य निर्मूलत्वात् । आमुष्यायण इत्यादौ वृद्ध्यभावापत्तेश्च । न हि प्रातिपदिकादयं तद्धितः किं तु सुबन्तादिति दिक् ।

---

अङ्गत्वादिति । तदनङ्गीकारे ह्यपाचितरामित्यादौ चिणो लुगापादनादिपरभाष्यविरोधः । चिणः परस्याङ्गसंज्ञानिमित्तस्य प्रत्ययस्य लुगित्यर्थात् । दिगिति । दिगर्थस्तु याथाकथाचमित्यादौ " यथाकथाचहस्ताभ्यां णयतौ " इत्यनेन वचनसामर्थ्येन निपातसमुदायात्प्रत्ययेऽङ्गत्वानापत्तौ वृद्ध्यनापत्तेरित्यलम् ।

---

स्यादतः 'काकेभ्यो दधि रक्ष्यताम्' इति वाक्यस्थकाकपदस्य दध्युपघातकसामान्ये यथा लक्षणा तथेहापि नुम्शब्दस्यानुस्वारमात्रे लक्षणा स्वीकार्येति भावः ।

तिङन्तस्य तरब्निरूपिताङ्गसंज्ञायाः फलमाह—तदनङ्गीकारे इत्यादिना । आपादनादीति—अत्रादिना तत्समाधानपरभाष्यसङ्ग्रहः एवमदुहितरामित्यत्रेटः सम्प्रसारणसंज्ञायां हल इति दीर्घः प्राप्तः स यथासंख्यविज्ञानान्नेति ग्रन्थस्य च न तस्य मते विरोधः । निपातसमुदायादिति । एतेन प्रातिपदिकत्वाभावो ध्वनितः । अलमिति । अलमर्थस्तु यदि णप्रत्ययस्य णित्वसामर्थ्याण्णित्वनिमित्तिका वृद्धिर्भविष्यतीत्याश्रीयते तदा नेदम्प्रयोजनम् । किन्तु औपगवादौ

"अतो भिस ऐस्" ॥ नन्वेस् इत्येवास्तु । न च "अतो गुणे" इति पररूपापत्तिः । एकारोच्चारणवैयर्थ्यापत्तेः । अन्यथा इसमेव विदध्यादिति चेत्सत्यम्—एदैतोर्द्विमात्रत्वाविशेषेण गौरवाभावादैस् कृतः । एवं च पररूपशङ्कैव नास्तीति महल्लाघवम् । यत्त्वाहुः—ऐस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति । तद्भाष्यविरुद्धम् । सन्निपातपरिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तितत्वात् ।

"नामि" ॥ परिभाषाविरोधादिति । एतच्च "रुधादिभ्यः श्नम्" इति सूत्रे "श्नान्नलोपः" इति सूत्रे च भाष्यकैयटयोः स्पष्टम् । आरम्भसामर्थ्यादिति । "सुपि च" इत्यस्य तु न सामर्थ्यम् । रामाभ्यामित्यादौ सावकाशत्वादिति भावः । एवं च

---

ऐस्कृत इति । नद्यैरित्यादिसिद्धये उत्तरार्थं तदित्यन्ये ।

स्पष्टमिति । "सुपि च" इत्यपेक्षया "नामि" इति तत्र नित्यमपि ध्वनितम् ।

विषयभेदादिति । तन्त्रेण ष(१)ष्ठीद्वयोच्चारणाद् आदेशरूपसस्य

---

वृद्धिर्न स्यात् । सुबन्तात्प्रत्ययस्य विधानेनाण्प्रत्ययनिरूपिताङ्गत्वस्य भवन्मतेऽप्राप्तेरिति बोध्यम् । यदि त्वत्रापि प्रातिपदिकाधिकारात्प्रातिपदिकादेव विधानमणादेः "कुत्सित" इति सूत्रस्थभाष्यरीत्या तु सुबन्ताद्भवन्तीत्युच्यते तदाऽपाचितरामित्यत्र लुगापादनपरभाष्यविरोध एव मुख्यन्दूषणमिति ।

उत्तरार्थमिति बहुलञ्छन्दसीत्युत्तरसूत्रार्थमित्यर्थः ।

मूले षष्ठी विषयभेदाद्भिद्यत इति । एतेन तन्त्रेण षष्ठीद्वयोच्चारणन्तत्रास्तीति दर्शितमेतदेवाह—आदेशेत्यादिना । षष्ठीभेद इति । अत्र प्रतिपाद्यार्थस्य भेदान्ङसद्वयोच्चारणङ्कार्यन्तच्च समुदायान्न सम्भवतीति सूत्रे तन्त्रेणो-

१ अयम्भावः-सम्बन्धभेदान्ङस्द्वयोच्चारणे प्राप्ते द्वन्द्वात्परं ङसद्वयोच्चारणासम्भवेन लक्ष्यानुरोधात् तन्त्रेण सकृदुच्चरितेनैमा सम्बन्धत्वेनैव सम्बन्धद्वयस्य बोधनम् । ततस्तत्तल्लक्ष्यविषयकवाक्यार्थजिज्ञासायां प्रत्येकं ङसन्तोच्चारणम् । इत्येवं वाक्यार्थभेदेन श्रोतृरूपषष्ठीभेद इत्यर्थः, 'अर्थभेदात् शब्दभेदः' इति न्यायात् ।

रामशब्दे " नामि " इत्यस्योपन्यासो लेखकप्रमादादिति यदूचुस्त-च्चिन्त्यम् ।

"आदेशप्रत्यययोः" ॥ एकाऽपि षष्ठी विषयभेदाद्भिद्यते इत्याशयेन व्याचष्टे–आदेशः प्रत्ययावयवश्चेति । यदि तु आदेशावयवो गृह्येत तर्हि तिसृणामित्यादौ दोषः । यदि च प्रत्ययो यः सकार इति तर्हि रामेष्वित्यादौ न स्यात् । यद्यप्येवं वैरूप्येण

---

स्थाने प्रत्ययावयवस्य स्थाने च षो भवतीत्येवंरूपः षष्ठीभेद इत्यर्थः । ओस्संबन्धद्वयार्थकं इत्यभि( १ )मानः । तिसृणामिति । तिस्रादेशे सकारोच्चारणन्तु तिस्र इत्यत्र " नरपर " इति षत्वनिषेधे चरितार्थमिति भावः । ठकारेऽतिप्रसङ्गादिति । " सोष्मणः सोष्माण इति

---

स्वरूपस्य सकृदुच्चारणेन निर्देशः कृतः । तत्तद्विषयस्य संस्कारकाले तु प्रत्येकं ङसन्तस्योच्चारणेन वाक्यस्य कल्पना कार्येति । इत्येवंरूप इति । इत्येवं व्याख्येयवाक्यार्थ इत्यर्थः, षष्ठीभेदः वाचिकायाः षष्ठ्या भेदः, नच ङसैकस्य सम्बन्धस्य बोधनवदोसा सबन्धयोर्बोधनम्भविष्यति, किन्तन्त्र स्वीकारेणेति वाच्यम् ? प्रतियोगिन एकत्वे ङसः प्रयोगस्तयोर्द्वित्वादावोसादेरिति कल्पना तन्त्रेणैवेत्याशयात् । 'ननु' यत्र शब्दस्य सारूप्यन्तत्र तन्त्रेणोच्चारणमिति भवति प्र कृतेतु तन्नास्तीति कथन्तन्त्रेणोच्चारणम् किञ्च प्रत्ययमात्रे तन्त्रेणोच्चारणं लोके न दृष्टमत–आह–ओस्सम्बन्धेति तथाचैकस्यौसो यतः सम्बन्धद्वयार्थत्वमत एवात्र तन्त्रव्यवहार इत्याशयः । अभिमान इति । प्रकाशग्रन्थानुवादकर्तुरिति शेषः 'ननु' यदि तिसृणामित्यत्र षकारस्यापत्तिस्तदा सकारोच्चारणवैयर्थ्यमत—आह—तिस्रादेश इति । चरितार्थमिति । एतेन तिस्र इत्यत्रैव षत्वापादने कार्ये तिसृणामित्येतत्पर्यन्तानुधावनमफलमिति यत्केनचिदुक्तन्तदपास्तम् । निषेधाविषयस्य प्रदर्शनाय तावत्पर्यन्तानुधावनात् । ' ननुसकारस्य सोष्मणो ऽघोषस्य तादृश एव षकार इति परोक्तानुवादङ्कृत्वा ठकारे ऽतिप्रसङ्गादिति यन्मूल-

---

१ अत्रारुचिबीजन्तु प्रत्ययमात्रे तन्त्रस्य क्वाप्यदृष्टत्वम् । एवञ्चात्र " लोपे प्रत्ययलक्षणम् " इत्येव सिद्धे प्रत्ययग्रहणेन षष्ठीप्रकृतिप्रत्ययपदप्रयोज्यविषयताश्रयत्वेन प्रत्ययावयवस्यापि ग्रहणम् , इति ज्ञापनेन प्रत्ययपदार्थस्यादेशपदार्थस्य चाभेदेनैव सकारेऽन्वय इति न दोष इति बोध्यम् । वस्तुतस्तु वैशिष्ट्यरूपः सम्बन्धः षष्ठ्यर्थः । स च स्वतादात्म्य–स्वावयवत्वान्यतरस्वरूप इति द्वन्द्वोऽप्युपपद्यत इतिगुरवः ।

व्याख्याने सहविवक्षाविरहात् द्वन्द्वो न युज्यते, तथाऽपि सौत्रत्वाद् बोध्यः। विवृताघोषस्येति। यत्तु वदन्ति—सकारस्य सोष्मणोऽघोषस्यान्तरतमः ष एव मूर्धन्य इति तन्न्यूनम्, ठकारेऽतिप्रसङ्गात्। तथा च प्रातिशाख्यम्—

"वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्यः"

इति। ननु दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं

---

द्वितीया" इति "स्थानेऽन्तरतम-" सूत्रस्थभाष्येण तस्यापि सोष्मत्वबोधनात्। सोष्मण इत्यस्योष्मत्वसहितस्येत्यर्थः। अत्रार्थे ऋष्यन्तरसंवादमप्याह-तथा चेति। प्राक् सुबुत्पत्तेरिति। सोपपदात्सिचेर्विजिति भावः। केवलात्सिचेर्विचि दध्नः सेचाविति समासे तु "उत्तरपदत्वे च" इत्यस्य "अपदादिविधौ" इति निषेधेन प्रत्ययलक्षणेन पदत्वसत्त्वात्पदस्यादिरिति पक्षे ऽपि सिद्धिरिति भावः।

---

कृता ऽभिहितन्तदयुक्तं ठकारस्य सोष्मत्वानुक्तेरत आह—सोष्मण इति। तस्यापि द्वितीयस्यापि. 'ननूष्मशब्दस्य शषसहा ऊष्माण इत्यत्र धर्मिवचनत्वस्य दृष्टतया सोष्माण इत्यनुपपन्नमत आह—सोष्मण इत्यस्येति। भावप्रधानोष्मशब्देन सोष्माणावित्यत्र समास इति भावः। नचैवंसति विवृतमूष्मणामित्यत्र द्वितीयस्यापि ग्रहणापत्तिरिति वाच्यम्? शषसहानामेव तत्र ग्रहणात्। अन्यथा नाज्झलाविति सौत्रनिर्देशस्यानुपपत्तिः स्यात्पूर्वस्य सोष्मत्वाभावात्। हकारस्य तु सोष्मत्वेन विवृतत्वेन प्रयत्नभेदस्य जागरूकत्वात् एतदेव ध्वनयति अत्रार्थे इति। ऋष्यन्तरेति आश्वलायनप्रातिशाख्यकृत इत्यर्थः।

ननु गतिकारकेतिवचनस्य कथं दधिसेचावित्यत्र प्रसक्तिर्यावता कैयटेन सोपपदाद्विज् नास्तीत्यभिहितमत आह—सोपपदादिति। सुपीत्यनुवर्तमाने ऽन्येभ्योऽपि दृश्यन्त इत्यनेनात्र विज् इति भावः। विचीति—सतिसप्तमीयम् दृश्यन्त इति। दृशिग्रहणादुपपदस्यापि व्यभिचारोऽत्र द्रष्टव्यः। अत एव वनिपा शर्वरीत्युदाहरणस्य सिद्धिरिति भावः। प्रत्ययलक्षणप्रतिषेधवचनस्याप्राप्तिमुद्घाटयति—उत्तरपदस्य इति। "उत्तरपदत्वे चापदादिविधौ" इति वचनेनेह निषेधः प्रत्ययलक्षणस्य न भवति पदादिविधित्वादित्याह—तत्र—उत्तरेति।

यद्यपि कैयटेन सोपपदात्सिचेर्विजेव नानभिधाना(१)दित्युक्तं, तथाऽपि "यचि भम्" इत्यत्र "सुप्तिङन्तम्" इत्यतः "सुप्" इत्यनुवर्त्य यजादौ सर्वनामस्थाने तत्प्रकृतेर्भसंज्ञा भवति, यजाद्यसर्वनामस्थानपरं सुबन्तं यद्यस्ति तदपि भसंज्ञम्, तेन सुवाचेत्यादौ न कुत्वम्। अत्र तत्प्रकृतेः संज्ञा प्रधानशिष्टा अवयवसुबन्तस्य त्वन्वाचयशिष्टा। एवं "स्वादिषु" इति योगं विभज्य स्वादिषु पूर्वस्य पदत्वं विधाय "असर्वनामस्थाने" इत्यत्र सुबन्तमित्यनुवर्त्य "यचि" इत्यपकृष्य प्रसज्यप्रतिषेधमाश्रित्य यजादौ सर्वनामस्थाने परतः पूर्वं पदं न, तत्परं यदि सुबन्तमस्ति तदपि पदं नेत्यर्थः। सुबन्तं च यजादिप्रत्ययाव्यवहितमेवातो राजपुरुषादौ पूर्वपदे नलो-

---

लुप्तविभक्तिकमुत्तरशब्दः समासचरमावयवे रूढे वाक्ये प्रयुज्यमाने वाक्यैकदेशस्य प्रयोग ति न्यायेन पदत्वशब्दः पदत्वव्यपदेशपरः, कर्तव्य इत्यस्याध्याहारः। नन्वत्र कैयटीयरीत्या केवलादेव विजिति पूर्वोक्तमसङ्गतमत—आह—**यद्यपीति**। **तथापीति**—अस्यानभिधाने न मानमिति परेणान्वयः। उत्तरपदत्वेति वार्तिकप्रत्याख्यानप्रकारमाह—**यचिभमित्यत्रेत्यादिना**। तेन = मध्यवर्तिसुपो भसंज्ञाविधानेन। 'नन्वेवं यचिभमिति सूत्रस्य व्याख्याने वाचेत्यत्र भसंज्ञा न स्यात् मध्यवर्तिसुबन्तविरहादत—आह— **अत्रेति**। नन्वेवमसर्वनामस्थानपरत्वं यत्र तत्र भसंज्ञयेष्टसिद्धावपि यत्र सर्वनामस्थानपरत्वं सुवाचावित्यादौ तत्र प्रत्ययलक्षणेन पदत्वं दुर्वारमेवेत्यत—आह— **एवमिति**। विभज्येत्यादि।

---

१ "नलुमताङ्गस्य" (पा. सू. १-१-६३) इति सूत्रे भाष्ये "अपदादिविधाविति किमर्थम्? 'दधिसेचौ' 'दधिसेचः'। सात्पदाद्योरिति प्रतिषेधो यथा स्यात्" इत्युक्तम्। अत्र कैयटः—"दध्नः सेचाविति षष्ठीसमासः। उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात् सेच्शब्दस्य पदसंज्ञाया अभावात् पदादित्वं सकारस्य न स्यात्। अनभिधानाच्च सोपपदाद् विजभावाद् दधिसेचावित्यादि प्रयोगाभावात्" इति। अयम्भावः—सोपपदाद् विच्स्वीकारे "अपदादिविधौ" इत्यस्य सत्त्वेपि सुबन्तत्वाभावेन 'सेच्' इत्यस्यापदत्वात् पदादित्वाभावेन "सात्पदाद्योः" इति निषेधाप्राप्त्या षत्वस्य दुर्वारतया "अपदादिविधौ" इत्यस्य फलप्रदर्शनपरभाष्यासङ्गतिरिति अनभिधानात् सोपपदात् सिचो विज् न इति कैयटः। अत्र रत्नकारः—"उत्तरपदत्वे" इत्यस्य प्रत्याख्यानपक्ष "दध्नः सेचौ" इति षष्ठीतत्पुरुषेऽपि "असर्वनामस्थाने" इत्यनेन सुबन्तस्यापि पदत्वनिषेधात् 'सेच्' इत्यस्य पदत्वाभावेन "सात्पदाद्योः" इति निषेधाप्राप्त्या षत्वापत्तिवारणाय "सात्पदाद्योः" इत्यत्र 'पदादादि' इति पञ्चमीसमासस्यावश्यकतया तेनैव सोपपदात् सिचो विच्यपि षत्ववारणसम्भवेऽनभिधाने न मानम्। नच "उत्तरपदत्वे" इत्यस्यारम्भपक्षे "अपदादिविधौ" इत्यस्य फलदानपरभाष्यासङ्गत्या तदनभिधानम्, यथोत्तरं मुनीनां प्रामाण्यात्। इति।

पदादादिः पदादिरिति पञ्चमीसमासो भाष्य उक्तः । ततश्चहापि "सात्पदाद्योः" इति निषेधः स्यादिति चेत् । मैवम् । स्वादिष्विति

---

पादिसिद्धिः । तत्र समुदायस्य " स्वादिषु " इति प्राप्ता, अवयवस्य सुबन्तमिति प्राप्ता, श्रूयमाणे सौ पूर्वपदस्य संज्ञेष्टैव, तेन सुवाचा-वित्यादिसिद्धिरित्येवम् " उत्तरपदत्वे च " इत्यस्य प्रत्याख्याने दध्नः सेचाविति षष्ठीतत्पुरुषे ऽपि षत्वनिषेधाय पञ्चमीसमास आवश्यक इत्यनभिधाने न मानमिति तात्पर्यम् । प्रत्याख्याने पञ्चमीसमासे बहु-सेचावित्याद्यर्थं बहुच्पूर्वस्य षत्वं नेति वचनं कार्यं, वार्त्तिकारम्भे तत्रैव कुत्ववारणाय " बहुच्पूर्वस्य चापदादिविधौ न " इतिवत् ।

---

ल्यबन्तानां नेत्यर्थ इत्यस्य शेषभूतं यत्कार्यं इति पदन्तद्घटकधात्वर्थकरणक्रियाया-मन्वयः । तत्र प्रथमल्यबन्तस्य विधायेत्यत्रैवान्वयः । प्रसज्यप्रतिषेधमाश्रि-त्येति । असमर्थसमासो ऽसर्वनामस्थान इति पद इत्याश्रित्येत्यपि बोध्यम् । तत्परम् यजादिसर्वनामस्थानपरमित्यर्थः ।

राजापुरुषादिशब्दघटकराजादिपदे निषेधातिप्रसङ्गशङ्कां वारयति सुबन्त-ञ्चेति । तत्र सुवाचावित्यादिशब्दे, अत्र योगविभागसामर्थ्यात् "अनन्तरस्य" इति न्यायस्य बाधो बोध्यः । यचीत्यस्यापकर्षणायम्प्रतिषेध उक्तस्तस्य फलमाह—श्रूयमाण इति । तेन = पदसंज्ञानिषेधेन । इत्येवमिति । यचिभमित्यारम्भो-क्तप्रकारद्वयरूपे इत्यर्थः । आवश्यक इति । अन्यथा पूर्वोक्तरीत्या सेचशब्दस्य पदत्वनिषेधात् "सात्पदाद्योः" इत्यस्य प्रवृत्तिर्न स्यादिति भावः । एवञ्चानभिधाने साधकालाभः यथोत्तरम्मुनीनाम्प्रामाण्याद्भाष्यकारोक्त्यैव व्यवस्थातात्पर्यमिति तथा वदतो मूलकृत इति शेषः । उत्तरपद इति वार्तिकारम्भप्रत्याख्यानपक्षयोस्तु-ल्यत्वमाह—प्रत्याख्यान इति । पञ्चमीसमासे–पदादादिरिति पञ्चमीसमासे सतीति शेषः । बहुसेचाविति । अत्र बहुचः प्रत्ययतया पदत्वाभावेन "आदेश" इत्यनेन प्राप्तस्य षत्वस्याप्रवृत्तये "सात्पदाद्योः" इति सूत्रानन्तरम्बहुच्पूर्वस्य चेति पठनीयमिति तात्पर्यम् । अस्मिन् पक्षे समासवरमावयवकस्य क्वचिद्योगविभाग-लब्धनिषेधेन वा पदत्वाभावः । श्रूयमाणे सौ पदसंज्ञा त्विष्टैव । तत्रैव = बहु-सेचावित्यत्रैव, समासाभावेन "उत्तरपदत्व" इति क्लृप्तस्य वचनस्य तत्राप्राप्ति-रिति पदस्यादिरिति षष्ठीसमासेनैव षत्वस्य वारणादाह–कुत्वेति । बहुच्पूर्वस्य चेति । पदादिविधिभिन्ने पदान्तस्य बहुच्पूर्वस्य कार्ये कर्तव्ये प्रत्ययलक्षणन्नेति

या पदसंज्ञा तामाश्रित्योक्तनिषेधो न प्रवर्तते इति सातिग्रहणेन ज्ञापितत्वात् । यत्त्वाहुः । प्रत्ययविषये नायं निषेध इति ज्ञाप्यत

---

इदमपि योगविभागस्येष्टसिद्ध्यर्थतया यत्रोत्तरपदस्य कार्यित्वं तद्विषय एव, पदान्तत्वप्रयुक्तकार्ये एव च बोद्धव्यमित्यन्यत्र विस्तरः। या पदसंज्ञेति । न च राजपुरुषेष्वित्यत्र दोषः, अन्तर्वर्त्तिविभक्त्या सुबन्तमिति पदत्वमाश्रित्य निषेधापत्तेरिति वाच्यम्, सातिग्रहणेन "स्वादिषु" इति यस्य पदसंज्ञा तदुत्तरस्य षत्वनिषेधो नेति ज्ञाप्यते इति तात्पर्यात् । प्रत्याख्यानरीत्या तस्यापि "स्वादिषु" इति पद-

---

तदर्थः । दधिसेचावित्यादिसमासेतु कृत्सवचनेनैव षत्वकुत्वयोरप्रवृत्तिः । अस्मिन्पक्षे समासचरमावयवस्य पदत्वं कार्यविशेष एव, नतु सर्वत्रेति विकल्पः श्रूयमाणे सौ पदत्वं नेति निष्कर्षः । एवमारम्भप्रत्याख्यानयोः साम्यन्दर्शितम् । इदमपीति उक्तप्रकारेण भसंज्ञादिकमपीत्यर्थः । एतेन दधिसेचावित्यत्र कुत्वाभावाय पदत्वनिषेधस्यावश्यकतया पदस्यादिरिति षष्ठीसमासे षत्वनिषेधानापत्तिः। वार्तिकसत्त्वे त्वपदादिविधावित्युक्तेर्दोषाभाव इति निरस्तम् ।

केचित्तु वार्तिकारम्भपक्षे लाघवमस्ति । तथाहि प्रत्याख्यानपक्षे स्वादिष्विति योगविभागः कार्यः, असर्वनामस्थाने इति सूत्रे ऽयचीत्यस्यापकर्षो ऽसमर्थसमासश्च स्वीकार्यः, 'भद्रङ् करोषि गौः' इत्यत्र 'एचो प्रगृह्यस्येत्यस्याप्रवृत्तिसिद्धये वाक्यान्तः सन् यः पदान्तस्तस्येति व्याख्यानञ्च कार्यम्, बहुच्पूर्वस्य चेति सात्पदाद्योरिति सूत्रानन्तरं पठनीयम् । वार्तिकारम्भेतु तस्यारम्भ एकः 'सात्पदाद्योः" इति सूत्रे सातेः पदादिति योगविभागेन पठनीयम्, अत्र पदशब्दः शक्तस्य पदसंज्ञकस्य च बोधकः । नच शक्तम्पदमिति नात्र शास्त्रे प्रसिद्धमिति भ्रमितव्यम् । "नेर्विश" इति सूत्रे "निरपि पदं विशिरपि पदमिति" भाष्ये "सर्वे सर्वपदादेशा" इत्यत्र च तस्य प्रसिद्धत्वात् । एवञ्च बहुचः प्रत्ययस्य कुत्साद्यर्थे शक्तिः स्वीकार्येति, बहुसेचावित्यादेः सिद्धौ बहुच्पूर्वस्य चेति वचनं न कार्यम् । नचाग्निसादित्यादौ पदादित्येव सिद्धे सातिग्रहणस्यापि एवं सति वैयर्थ्यमिति वाच्यम्? "स्वादिषु" इति यस्य पदसंज्ञेति वक्ष्यमाणार्थज्ञापनाय तस्यावश्यकत्वात् । वस्तुतस्तु सातिग्रहणं विध्यर्थङ् कार्यम् । "हलि सर्वेषाम्" इति निर्देशेन प्रकृत्युत्तरप्रत्ययावयवस्य पदत्वमिति ज्ञापनात् । अतएव 'बुभूषति' 'राजपुरुषेषु' इत्यादेः सिद्धिः । ध्वनितञ्चेदन्तात्पर्यमित्यरुचिसूचकशब्दोपादानेन । एवञ्च मूलोक्तज्ञापकं

इति । तन्न । व्यतिसे इत्यादौ षत्वापत्तेः । ननु पदस्यादिरिति पक्षे 'व्यतिसे' इत्यत्र षत्वं दुर्वारम् । न च व्यपदेशिवद्भावेन से

---

त्वाच्च । सर्वं चेदं " न लुमता- " इति सूत्रे भाष्ये स्पष्टम् । व्यतिसे इति । यद्यपि व्यतिहारस्यानेककर्तृकक्रियाविषयत्वादेकवचनस्य तत्रासम्भवस्तथाऽपि विश्वामित्राश्रमे मारीचं प्रति किमर्थं ब्रह्मवधं करोषीति पृष्टे ममायं धर्म इति तेनोत्तरिते ।

---

विनैव रामेषु इत्यादिसिद्धौ लाघवमिति, न चैवंसति बहुसेचावित्यत्रापि षत्वापत्तिरिति वाच्यम् ? सादिति लुप्तषष्ठयन्तं, भिन्नम्पदम् पदाद्यौरित्यत्र तु पदञ्च आदिश्चेति द्वन्द्वात्पञ्चमी आदिशब्दश्चादित्वविशिष्टबोधकशब्दपर इति, बहुचो लाभ इत्याहुः ।

पदत्वमाश्रित्येति नचोत्तरपदत्व इति वार्तिकेन निषेधः स्यादिति वाच्यम् ? उत्तरपदस्य कार्यित्वाभावेन तस्याप्राप्तेः । ननु सोः समुदायाद्विधानेन राजपुरुषेष्वित्यत्र कथमेतावता निर्वाह इत्यत आह—प्रत्याख्यानरीत्येति । अत्र प्रत्याख्यानरीत्येतिकथनेन वार्तिकारम्भपक्षस्य युक्तत्वं सूचितम्, अत एव भाष्ये उक्तरीत्या प्रत्याख्यानम्प्रदर्श्य पुनर्नञ्घटितस्य तस्य वचनस्य पाठेन तस्य सत्वन्ध्वनितम् । तस्यापि—उत्तरपदस्यापि, अयम्भावः प्रत्याख्यानं स्वादिष्विति योगविभागेन क्रियते, एवञ्चासर्वनामस्थाने यचीत्यत्र सुबित्यस्य चेत्, अनुवृत्तिस्तदा स्वादिष्वित्यत्रापि तस्य सम्बन्धः कार्यः । अन्यथा मण्डूकप्लुत्यापत्तिरिति मध्यवर्तिसुबन्तस्यापि तेन पदत्वम्भवतीति, एवञ्चेदं समाधानमपि प्रत्याख्यानानुरोधीति स्पष्टं लभ्यते । स्वादिपरत्वेन यस्य पदसंज्ञेति ज्ञाप्यतामित्येतच्च 'सात्प्रतिषेधो' ज्ञापकः, स्वादिपरत्वेन येषाम्पदसंज्ञा न तेषाम्प्रतिषेध इति कथनेन भाष्यकृता सूचितमेव । केचित्तु सातिग्रहणेन नोक्तार्थो ज्ञाप्यते किन्तु पदादेरिति प्रतिषेधः, प्रत्ययस्य षत्वे कर्तव्ये न प्रवर्तत इत्येव ज्ञाप्यते इति वदन्ति । तन्मतन्दूषयति । मूले यत्त्वाहुरित्यादिना । आहुरित्यस्य प्रकाशकृत इति शेषः । अनेककर्तृकेति । अयं भावः कर्तरिकर्मेतिसूत्रे कर्मशब्दः क्रियापरः व्यतीहारश्च परिवर्तनरूपः अत एव ''उदीचाम्माङो व्यतीहारे'' इति सूत्रस्य 'अपमित्ययाचते' इत्युदाहरणव्याख्यानावसरे याचित्वा वस्त्राणि परिवर्तयतीति कैयटेनोक्तम् । एवं स्वीयं वस्तु दत्वा परकीयस्य वस्तुनो ग्रहणमपि व्यतीहारः, प्रणिदानं व्यतीहार इत्यनर्थान्तरमिति घुसंज्ञासूत्रस्थकैयटात् । एवञ्च सम्प्रहरन्ते राजान इत्यत्रेवानेकसाध-

इत्यस्यापि तिङन्तत्वात्पदत्वं शङ्क्यम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । अन्यथा 'रामेषु' इत्यादावपि षत्वनिषेधापत्तिरिति चेत्सत्यम् । न वयं प्रत्ययमात्रस्य तदन्ततां ब्रूमः, किं तु प्रकृतिप्रत्ययसमुदाये प्रवृत्तां पदसंज्ञामेकदेशविकृतन्यायेन लुप्तप-

---

" धर्मोऽस्ति( १ ) सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः । ब्रह्मद्विषस्ते प्रणिहन्मि येन "—( भट्टि का. )

इति भट्टिकाव्यस्थरामवाक्ये तव धर्मेण ममान्यो धर्मस्तपोरूपो व्यत्यासेन भवति येन धर्मेण त्वत्सम्बन्धिनो निहन्मीत्यर्थके एकवचनदर्शनान्न दोषः । अद्यारभ्य त्वद्धर्मः क्रौर्यं मयि भवति, मद्धर्मोऽक्रौर्यं च त्वयि " वर्त्तमानसामीप्ये " लट् । रामबाणपातेन समुद्रसमीपे पतितो मारीचस्तपश्चचारेति रामायणे प्रसिद्धम् । अन्यसम्बन्धिक्रियामितरः करोति, इतरसम्बन्धिनीमन्य इति कर्मव्यतिहारसम्भवादिति

---

नसाध्यक्रियास्थल एव व्यतीहारसम्भव इति यत्र कर्तृभेदस्तत्रैव कर्तरिकर्मेति सूत्रस्य प्रवृत्तिर्युक्तेति भावः । अत एवैतादृशस्थले बहुवचनान्तप्रयोग एव प्रायेण दृश्यते । क्वचिद्व्यतिलुनीत इति यत्, तदयुक्तम् । एवम्भट्टिप्रयोगो ऽप्ययुक्त एव "बाधे दृढ" इति न्यायात् । नचैवंसति "तासस्त्योः" इति सूत्रस्य यव्यतिसे इति वृत्तिकारोक्तमुदाहरणन्तत्कथं सङ्गच्छतामिति वाच्यम् ? तस्य छान्दसत्वात् । एवञ्चैकवनान्तप्रयोगो लोके ऽसाधुरेवेति । "तथापि स्वरूपव्याक्रियैव परा क्रिया" इति न्यायेन समाधत्ते तथापीत्यादिना फलतीत्यन्तेन । प्रणिहन्मि येनेत्यस्याग्रे "राजन्यबन्धुर्धृतकार्मुकेषुः" इति

चतुर्थः पादः । तव धर्मेण—देवब्राह्मणद्वेषरूपेण, येन धर्मेणेति । युक्तमिति शेषः । त्वत्सम्बन्धिन इति ब्रह्मद्विषस्त्वत्सम्बन्धिनो निहन्मीति योजना । तात्पर्यार्थमाह—अद्यारभ्येति । ननु क्रौर्याक्रौर्ययोर्भावित्वात्कथमत्र लडित्यत-

---

१ वस्तुतस्तु व्यतिहारः = परिवर्तनम्, "प्रणिदानम्, व्यतिहार इत्येकोऽर्थः" इति घुसंज्ञासूत्रे कैयटोक्तेः । तच्च स्ववस्तुदानपूर्वकं परवस्त्वङ्गीकारात्मकम् । तथा च साध्यस्वभावक्रियाणां तत्वासम्भवेन कर्मव्यतिहारपदेनात्र तत्तत्साध्यत्वेन ज्ञातक्रियाणां साध्यसाधनभावव्यत्यासः, मिथः करणञ्च गृह्यते तत्र वर्तमानाद्धातोरात्मनेपदमित्यर्थे तत्कर्तृमात्रे प्रत्ययौचित्येन, भाष्ये एकवचनं परित्यज्य द्विवचनाद्यन्तोदाहरणदर्शनेन च द्विवचनाद्यन्तान्येव तस्योदाहरणानि । "बाधे दृढेऽन्यदपि बाध्यताम्" इति न्यायेन "नहि कस्यचिद्ग्रन्थकृतोविपरीतलेखनं युक्तिबलाद् वस्तुसिद्धौ बाधकम्" इति गदाधरोक्तदिशा एकवचनान्तभट्टीप्रयोगोऽप्यसाधुरेवेत्याहुः ।

कृतिके प्रत्यये ऽप्यानयामः । 'रामौ' 'रामा' इत्यादावपि हि एकदेशविकृतन्यायेनैव पदत्वम्, एकादेशात्प्रागेव पदसंज्ञाप्रवृत्तेः । न त्वेकादेशे कृते "सुप्तिङन्तम्" इत्यस्य प्राप्तिरस्ति । उभयत आश्रयणे नान्तादिवदिति सिद्धान्तात् ।

यत्तु वदन्ति । प्रकृतिसन्निधाने प्रत्ययस्य पदत्वं नास्ति । "मन्त्रेषु" "सर्वेषाम्" इत्यादिनिर्देशादिति । तन्मन्दम् । उक्तरीत्या पदत्वाभावे न्यायसिद्धे ज्ञापनस्यासम्भवादनुपयोगाच्च ।

---

जयमङ्गला । व्यतिसे इत्यस्य हे चैत्र मैत्रेण सह व्यत्यस्तो भवसीत्यर्थः । यद्देशे मैत्रसत्ता तद्देशे चैत्रस्य सा, यद्देशे चैत्रस्य सा तद्देशे मैत्रस्य सेति फलति । यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशो वक्तुं शक्यः । रामेष्वित्यादौ त्वसहायत्वाभावान्न तत्प्रवृत्तिस्तथाऽपि पूर्वपदयुक्तमभ्युपेत्यापि समाधातुमुपक्रमतेनवयमित्यादिना । सिद्धान्तादिति । "सुप्तिङन्तम्" इत्यत्र "यस्मात्प्रत्ययविधिः" इत्यनुवृत्तेरिति भावः । अत्र कृते अप्येकादेशे एकदेशविकृतन्यायेनोक्तरीत्या मान्तस्य प्रकृतित्वात् औ इत्यस्य परादित्वं साधितम् ।

---

आह—"वर्तमानसामीप्य इति" । इति कर्मव्यतीहारेति इत्येवंरूपो यः कर्मव्यतीहारः तस्य सम्भवादित्यर्थः । फलतीति—तथाचात्र, यन्मूले अभिहितं तद्भद्वयनुरोधेनेति बोध्यम् । अस्याप्यशास्त्रीयस्य = यस्माद्विहितस्तदादित्वस्याशास्त्रीयस्यापि । रामेष्वित्यादौ । प्रत्ययमात्रेतु भवदुक्तः प्रकारो नेत्याह—राम इत्यादिना । असहायत्वेति—सूत्रे एकस्मिन्नित्यस्योपादानेन लोके सजातीयसहायसद्भावे व्यपदेशिवद्भावादर्शनेनासहाय एव तत्प्रवृत्तिरिति भावः । पूर्वपदयुक्तमिति । व्यतिसे इति प्रयोगस्यैव लोकेऽसत्वमिति भावः । अभ्युपेत्येत्यनेन अस्मदुक्तरीत्या समाधानस्यौचित्यं ध्वनितम् । सिद्धान्तपदोपादानेन सिद्धान्तान्तरस्य स्मरणसम्भवादाह—अत्रेति रामावित्यादि लक्ष्य इत्यर्थः । एतेन यथोद्देशपक्षे निर्वाहेऽपि कार्यकालपक्षे कथन्निर्वाहः "उभयत आश्रयणे नान्तादिवत्" इति निषेधेनान्तादिवच्चेति सूत्रेण निर्वाहो वक्तुमशक्यः इति शङ्काया नावकाश इति ध्वनितम् । उक्तरीत्या = पदत्वानयनकालोक्तरीत्या, एवं सिद्धान्तान्तरकथनेन

"सर्वादीनि सर्वनामानि" ॥ सर्वादीनि इति तद्गुणसंविज्ञानो बहुव्रीहिः । "हलि सर्वेषाम्" इति निर्देशात् । द्वन्द्वे चेतीति । स हि समुदायस्य निषेधो न त्ववयवानामिति वक्ष्यते । न च तदन्तविधिंविना समुदाये संज्ञाप्रसक्तिरस्तीति भावः । ननु तदन्तसञ्ज्ञायाः किं फलम् । न च परमसर्वस्मायित्यादौ स्मायादयः

---

अनुपयोगाच्चेति । चेन ससहाये व्यपदेशिवद्भावाप्रवृत्त्या तत्संनिधाने तेषां पदत्वं नास्तीति सूचितम् । "आद्यन्तवत्-" सूत्रस्थभाष्योक्तैकपुत्रादिदृष्टान्तबलेन तथैव लाभादिति दिक् ।

तद्गुणसंविज्ञान इति । तस्य अन्यपदार्थस्य गुणा = विशेषणानि संविज्ञायन्ते कार्यित्वादिना यत्रेत्यर्थः । ( १ )प्रायः संयोगसमवाया-

---

भाष्यैकवाक्यतापि सिध्यतीति दर्शयति इदञ्चेति । मूले नास्तीति नास्त्येवेत्यर्थः । तत्सन्निधाने । प्रकृतिसन्निधाने तेषाम् प्रत्ययानाम्, चकारो दोषान्तरसमुच्चायक इत्याशयेनाह—चेनेति । एवञ्च मन्शोप्रित्यादिहेतूक्तिमात्रोपपादनं तेषामयुक्तमिति । भावः । दिगिति । दिगर्थस्तु व्यनिसे इति प्रयोगस्य लौकिकस्याभावे मूलोक्तं सर्वमापातरमणीयम् । एकस्मिन्नस्य सूत्रे उपादानेनासहाय एव न्यायप्रवृत्तेरिष्टत्वमिति । विशेषणानि वर्तिपदार्थरूपाणीति शेषः । संविज्ञायन्त इति । एतेन संविपूर्वकाज्ज्ञाधातोः कर्मणि ल्युडिति ध्वनितम् । तेन तद्गुणाः सविज्ञानं यत्रेति सामानाधिकरणपदकोपि बहुव्रीहिः सम्भवतीति बोध्यम् । नचातद्गुणसंविज्ञानबहुव्रीहौ सर्वशब्दाद्यवयवकसमुदाय उद्भूतावयवभेदो अन्यपदार्थं इति लभ्यते । तथाच तस्य लक्ष्ये प्रयोगाभावात्संज्ञाविधानवैयर्थ्यमिति वाच्यम्, अजादिसंज्ञावत्प्रत्येकन्तद्विश्रान्तेः स्वीकारादत्रैव मानं दर्शयितुं मूले "हलि सर्वेषाम्"

---

१ बहुव्रीहिर्द्विधा तद्गुणसंविज्ञानः, अतद्गुणसंविज्ञानश्च, "अनेकम्" इति सूत्रे "भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा । शुक्लवाससमानय, लोहितोष्णीषा ऋत्विजः प्रचरन्ति तद्गुणआनीयते, तद्गुणाश्च प्रचरन्ति" इति भाष्योक्तेः । तस्य = अन्यपदार्थस्य गुणानाम् = विशेषणानां कार्यान्वयितया संविज्ञानं यत्रेत्यर्थेन 'लम्बकर्णमानय' इत्यादावाद्यः । 'चित्रगुमानय' इत्यादावन्त्यः । नन्वेवम् 'नागयज्ञोपवीती भोज्यताम्' इत्यत्र हरिसम्मततद्गुणत्वानुपपत्तिरत आह संयोगेति संयोग–समवायान्यतररूपसम्बन्धे यदा बहुव्रीहिस्तदा तद्गुणत्वम्, तदतिरिक्तस्वस्वामिभावादिसम्बन्धे यदा बहुव्रीहिस्तदा अतद्गुणत्वम् । एतेन प्रयोगकाले 'दृष्टसागरमानय' इत्यादौ सागरस्य संयोगसम्बन्धेनान्यपदार्थवैशिष्ट्ये तद्गुणत्वापत्तिरित्यपास्तम् संयोगसम्बन्धे बहुव्री-

फलम्। अङ्गाधिकारे तदन्तविधिनैव तत्र सिद्धेरित्यत आह—

न्यतरसम्बन्धेन सम्बन्धी यत्रान्यपदार्थस्तत्र तद्गुणत्वम्। तदतिरिक्त स्वस्वामिभावादिसम्बन्धेन सम्बन्धिनस्तत्त्वे ऽतद्गुणत्वम्। नागयज्ञोपवीती भोज्यतामित्यादौ यज्ञोपवीतस्य कार्यित्वाभावेऽपि त(१)त्संनिहितत्वमस्त्येवेति तद्गुणत्वमेवेति हरिग्रन्थे स्पष्टम्। तत्सिद्धेरिति न च सर्वनाम्नो विहितत्वाभावः। तदन्तसंज्ञाभावे "द्वन्द्वे च"

इति निर्देशादित्युक्तम्। एवञ्च विधेयान्वयि स्वघटकावयवार्थको बहुव्रीहिस्तद्गुणसंविज्ञानः। यस्त्वेवन्न सोऽतद्गुणसंविज्ञानः तस्य लोके प्रवृत्त्युदाहरणमाह—प्राय इत्यादिना। लोहितोष्णीषा ऋत्विजः प्रचरन्ति, लम्बकर्णमानयेत्युदाहरणे लम्बकर्णम्भोजयेत्यत्र तथान्वयादर्शनादाह—प्राय इति। एतेनोक्तनियम औत्सर्गिक इति सूचितम्। इदम्भेदद्वयमनेकेतिसूत्रविहितबहुव्रीहेः। नन्वेवन्नागयज्ञोपवीती भोज्यताम्, शुक्लवाससम्भोज्यतान्नागचर्मोत्तरच्छदमित्यादौ विधेयान्वयस्य विशेषणे ऽदर्शनादतद्गुणत्वमेव स्यान्नचेष्टापत्तिः विशेषोपादानस्य व्यर्थत्वापत्तेरत आह—नागेति। तथाचैतेषु विशेषधर्मविशिष्टबोधकशब्देनोपादानसामर्थ्याद्विशेषस्य क्रियायामन्यपदार्थान्वयवेलायां सन्निधिमात्रे तद्गुणत्वव्यवहारः। एवंरीत्या तद्गुणत्वे मानन्तु हरिवंशीयो, व्यालयज्ञोपवीताश्च, केचित्तत्र महासुरा इति, बाणयुद्धप्रसङ्गसमयकालिकवर्णनपरप्रयोग एवेति। अत्र न कर्मधारयादिति निषेधस्तु असुब्वत भाष्यप्रयोग इवात्र न। अयं भावः पूर्वोक्ततद्गुणसंविज्ञानशब्दार्थनिरूपणावसरे कार्यित्वादिनेत्यत्रादिपदमुपाददानेन विधेयसमानकालिकत्वस्यापि ग्रहणमिति ध्वनितं तथाच विधेयक्रियान्वयित्वतत्कालवृत्तित्वान्यतरवत्त्व-

हेरभावात्। तथा च संयोग-समवायान्यतरसम्बन्धेन बहुव्रीहिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणसंविज्ञानत्वम्। संयोगसमवायातिरिक्तसम्बन्धेन बहुव्रीहिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वमतद्गुणसंविज्ञानत्वमिति फलितम्। प्रकृते चावयवावयविनोः समवायसम्बन्धस्य क्लृप्ततया बहुव्रीहिघटकसर्वपदार्थस्य सर्वादिसमूहरूपान्यपदार्थे समवायसम्बन्धेन वैशिष्ट्यसत्त्वात्तद्गुणसंविज्ञानत्वम्। न च 'नागयज्ञोपवीती' इत्यस्य कर्मधारयान्मत्वर्थीयप्रत्ययान्तत्वेन तद्गुणत्वोदाहरणत्वासंगतिरितिवाच्यम् "अनेकम्" इति सूत्रभाष्ये "मत्वर्थे यो बहुव्रीहिरिति वक्तव्यम्" इत्युक्तेः, मत्वर्थेयः तस्य बहुव्रीहिसंज्ञकत्वात् तत्रापि तादृशत्वस्येष्टत्वात्, नागयज्ञोपवीती भोज्यताम् इति पाठाभिप्रायेण तदुक्तेश्चेति सर्वमनवद्यम्।

१ बहुव्रीहिविशिष्टार्थबोधकत्वम् तद्गुणत्वम् व० स्वार्थान्वय्यन्वयित्व-स्वार्थान्वयकालिकस्वार्थसन्निहितत्वान्यतरसम्बन्धेनेत्यभिप्रायेणेदम्।

रसर्वनामस्थाने "थो न्थ" इति सूत्रद्वये सुटीति व्याख्यातम्। तदसत्
निर्बीजलक्षणापत्तेः। क्लीबे औङः श्यां सुपथी इत्यत्रातिव्याप्तेः।
सुपन्थानि पश्येति शसि रूपस्यासिद्धिप्रसङ्गाच्चेति भावः।

अत्रेदमवधेयम्। पन्थानमात्मन इच्छति पथीयति। ततः
क्विप्। अलोपः। यलोपः। एकदेशविकृतस्यानन्यत्वात् पथिमथी-
त्यात्वम् थो न्थः पन्था:। "इतोत्सर्वनामस्थाने" इत्यत्वं न

---

स्थानिश्रवणात्तदन्तविध्यभावाच्चेति भावः। अयम्-इनः स्त्रियामि-
त्येषः। एवं च "ऋकूपू" रित्येव तेन निषेधेनापि वारयितुं शक्य
इति भावः।

थो न्थश्चेति। थो न्थ इति सूत्रमित्यर्थः। चाट्टिलोपः प्राप्तमिति।
तदन्तग्रहणादिति भावः। न भवतीति। न च टिलोपो न विभक्तिनि-
मित्तकोऽन्यत्रापि तत्प्रवृत्तेरिति वाच्यम्। प्रकृतोदाहरणे विभक्तिनि-
मित्तत्वमात्रेण तत्प्रवृत्तेः। अत एव 'युवोरनाकौ' इति सूत्रभाष्ये
श्वयुवेत्यादेः परिभाषाफलत्वेनोपन्यासः सङ्गच्छते। परत्वादित्यभ्यु-

---

त्वेन प्रकृते प्राप्तेरेवाभावेन तथाभिधानमसङ्गतमित्याह—सवर्णेति। मूले
तद्विशिष्टस्येति घटकत्वसम्बन्धेन थकारविशिष्टसमुदायस्येत्यर्थः।

अनयोस्तदंतविधिना समुदायस्य प्राप्तिमाह—तदन्तेति। विभक्ताविति
परिभाषाया यस्मिन्कार्ये विभक्तिरेव निमित्तन्तत्रैव। प्रवृत्तिरित्याशङ्कान्निरा-
चष्टे—नचेति। अन्यत्र विभक्तिभिन्ने, प्रातिपदिकप्रकृतिकार्येऽपि विभक्तिनि-
मित्तत्वमात्रेति विभक्तेर्निमित्तत्वमात्रेत्यर्थः। अत एव तावतैव परिभाषायाः
प्रवृत्तिसत्वादेव, श्वयुवेत्यादेरिति श्वयुवेत्यादिशब्दनिमित्तस्य नगोश्वन्निति निषे-
धस्य सम्प्रसारणस्य चेत्यर्थः। शुन्याइत्यादि प्रथमस्योदाहरणं युवतीः पश्येत्यादि
द्वितीयोदाहरणम् द्वितीयाविधायकसूत्रेऽतिप्रसङ्गपरिहाराय "अल्लोपोन" इतिसूत्रा-
दन इत्यस्यापकर्षो नाश्रयणीयः। शुन्येत्यादौ निषेधस्य निवृत्तये सा परिभाषाऽ-
वश्यमाश्रयणीया तयैव निर्वाहादिति भावः। अत्रोभयोरपि सूत्रयोर्विभक्तौ प्रवृत्ति-
मात्रेण परिभाषायाः प्रवृत्तिः। मूले ऽन्यः पन्था इति नचास्य स्वीकारे "युवोर-
नाकौ" इति सूत्रभाष्ये विभक्ताविति परिभाषायाः प्रयोजनकथनावसरे पथीमथी
इत्यत्रात्वन्नेत्युदाहरणत्वेनोपन्यस्तम् ततः परेण 'न केवलः पथिशब्दः स्त्रियामस्ति
इत्युक्तन्तदस्य पथीशब्दस्य स्त्रियां सत्वसम्भवाद्विरुध्यत इतिचेन्न एतदजानताएक-

भवति । इत इति तपरकरणात् । "एरनेकाच" इति यणं बाधित्वा परत्वाद् नित्यत्वाच्च थो न्थः । संयोगपूर्वकत्वान्न यण् । पन्थियौ, पन्थियः, पन्थियं, पन्थियौ । भस्य टेर्लोपः । पथः पथीभ्याम्

---

श्चयः । न चाभिव्यक्तपदार्था इति न्यायेनकथमत्रात्वादीनां प्रवृत्तिः । तस्य न्यायस्य पदकार्यविषयत्वेन तपरकरणादनित्यत्वेन चेहाप्रवृत्तेः । न च केवलः पथिशब्दः स्त्रियामस्तीति "युवोरनाकौ" विति सूत्रस्थभाष्यप्रामाण्यादेभ्यः क्यजन्तेभ्यः क्विपोऽनभिधानमिति वाच्यम् । स्त्रीप्रत्ययाप्रवृत्त्या तदङ्गीकारेऽप्यक्षतेः । विभक्तौ लिङ्गविशिष्टाग्रहणमित्येतत्प्रयोजनकथनावसरे हि भाष्ये तदुक्तम् । न यणिति । ननु तदभावेऽपीयङ् दुर्लभः । सुब्विधावन्तवर्तिविभक्त्याश्रयनलोपस्यासिद्ध-

---

देशिना तथोक्तत्वात् । ततो भगवता सुपथीत्युदाहृतम् । केवलं स्त्रियां वृत्यभावेऽपि तदन्तस्य सम्भवति तत्र प्रयोग इत्याशयः । नचैतदाचारक्विपोऽपि सम्भवतीति वाच्यम् ? हलन्तेभ्य आचारक्विपोऽनभिधानात् । यद्वा न केवलेत्यस्य स्त्रीबोधकप्रत्ययान्तो नेत्याशयः कल्प्यः । वस्तुनो झटिति प्रतीयमानतदर्थविरोधादेतदसङ्गतमिति अस्याप्यभिधाने न दृढम्मानमिति बोध्यम् । ननु समबलस्थले व्यवस्थापकत्वम्परत्वस्य नित्यानित्ययोस्तु तथात्वविरहात्कथन्नत्र परत्वस्य नियामकत्वमत आह—अभ्युच्चय इति । अर्थवादवाक्यवत्प्रकर्षमात्रतात्पर्यकस्तथावादो नतु स्वार्थतात्पर्यक इति भावः । अभिव्यक्तेति न्यायस्य सामान्यतः प्रवृत्त्यभिमानः । शङ्कान्निरस्यति—नचेति । स्वीयसिद्धान्ताभिप्रायेणाह—तस्येति । प्राचीनरीत्याऽऽह-तपरकरणादिति । पूर्वक्तार्थन्दृढयितुं शङ्कासमाधाने करोति—नचेत्यादिना । स्त्रीप्रत्ययाप्रवृत्त्येति एतेन स्त्रीप्रत्ययस्तत्प्रकृतिको नास्तीत्यर्थः सूचितः तथाच तादृशस्त्रीप्रत्ययान्तो नास्तीति फलितम् । मूले पन्थियावित्यत्र न्थादेशकल्पने थेन्थ इत्येवसिद्धे इतोद्वचनमृभुक्षिन्नर्थमिति पूर्वग्रन्थविरोध, इति तु न वाच्यं । ऋभुक्षिन्नर्थमित्यस्यैतदुपलक्षणत्वात् । सुपनिमित्तकविधावित्यर्थमात्राभिप्रायिकामाशङ्कान्निरस्यति—नन्वित्यादिना । अत एव "नलोपः सुब्" इति सूत्रे सुप्त्वतद्व्याप्यधर्मावच्छिन्नविधेरेव ग्रहणादेव षत्व इति कर्तव्य इति शेषः । असिद्धत्वन्नेति सुब्विधावसिद्धत्वस्यापूर्वविधित्वन्नेत्यर्थः एतेन षत्वविधिः परो नलोपशास्त्रन्तु पूर्वमिति कथं षत्वे कर्तव्ये नलोपासिद्धत्वस्य प्राप्तिरिति परास्तम् । अस्य ग्रन्थस्य स्वरादिविधौ यथा नियमत्वन्तथा सुब्विधावपि तदेक-

पथीभिः। इत्यादि। एतेन "इतोऽत्सर्वनामस्थाने" इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति हरदत्तग्रन्थः प्रत्युक्तः।

---

त्वेनेवर्णान्ताङ्गाभावादिति वाच्यम्। सुप्त्व (१) तद्व्याप्यधर्मनिमित्तकसुब्विधेरेव ग्रहणात्। अत एव दण्डिष्वित्यादौ षत्वेनलोपस्यासिद्धत्वं न। न च न्थादेशेऽङ्गवृत्तपरिभाषया नेयङ्। तस्या अनित्यत्वात्। न चेयङि कृतेऽत्वं दुर्वारम्। संनिपातपरिभाषया स्वातिरिक्ततद्विघातकस्य बाधनाददोषादिति भावः। न च प्रकृतिप्रत्ययविशेषा-

---

वाक्यतया नियमत्वमेवेत्याशयात्। तच्च नियमत्वं सुब्विधिशब्दस्य सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तकविधावित्यर्थकत्व एव सङ्गच्छत इति तात्पर्यम्। तस्याः अङ्गवृत्तपरिभाषायाः, अत्वं दुर्वारमिति एतदवयवस्य ह्रस्वेकारस्य सन्निपातपरिभाषयेति इयङादेशे इत्वावच्छिन्नस्य सत्वन्निमित्तन्तच्चेयङादेशेप्यनुवर्तत एव यद्यस्येकारस्यात्वं स्यात्तदा तद्विघातः स्पष्ट एवेति भावः। मतान्तरङ्खण्डयति—नचेति। प्रकृतीत्यादेः पथ्यादिप्रकृतिसर्वनामस्थानरूपप्रत्ययविशेषापेक्षेत्यर्थः। यण्विधौ चेवर्णान्तधात्वादिरूपसामान्यस्याजादिप्रत्ययरूपसामान्यस्याचापेक्षेति यणन्तरङ्ग इति भावः। यत्र विशेषापेक्षशास्त्रनिमित्तत्वं सामान्यापेक्षशास्त्रनिमित्तत्वस्य व्याप्यं तत्रैव सामान्यापेक्षेऽधिकस्याप्यपेक्षासत्वेन बहिरङ्गत्वव्यवहारः। प्रकृते तु तथा नेत्याशयेनाह—प्रातिपदिकेति। अत्र "थोन्थ" इत्यत्र प्रकृतित्वेन सर्वनामस्थानप्रकृतित्ववत्त्वेन हलादेः सोः यण्प्रकृतीति यणादेशशास्त्रोक्तप्रकृतित्वतन्त्रत्यनिमित्तप्रत्ययत्वव्याप्यत्वाभावादित्यर्थः। एतेन सामान्यापेक्षशास्त्रनिमित्तत्वनिष्ठव्यापकतानिरूपितव्याप्यत्वाभावः सूचितः। विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यस्यतु यत्र सामान्यपेक्षे विशेषापेक्षशास्त्रीयनिमित्तस्य ततोऽधिकस्य चापेक्षा तत्रैवोक्तव्यापकतानिरूपितव्याप्यतायाः सत्वात्प्रवृत्तिरित्यभिप्रायः। परिभाषाया

---

१ वस्तुतस्तु एवमर्थस्वीकारे "इकोऽचि" इत्यस्य सुब् विधित्वाभावेन 'अचि' इत्यस्य सुब्विधित्वाभावेन 'अचि' इत्यस्याभावे नपुंसके 'दण्डिभ्याम्' इत्यत्र नलोपे नुमि लक्ष्ये लक्षणन्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणम्, "अचि" इत्यस्य सत्त्वे नकाराश्रवणमिति फलभेदात् "इह किञ्चित् त्रयो" इति "नञुमता" इत्यस्यानित्यत्वज्ञापनपरभाष्यासङ्गतिरिति "नलोपः सुप्स्वर" इति सूत्रे "पूर्वत्र" इत्यनुवर्त्य 'पूर्वेषु सुबादिविधिषु कर्तव्येषु न लोपोऽसिद्धः' इत्यर्थेन षत्वस्य पूर्वत्वाभावेनासिद्धत्वाप्राप्त्या सुप्त्वतद्व्याप्येत्याद्यर्थो विफल एव।

यत्तु न्यासकारस्तदनुसारिणोऽन्ये च सुखीः सुतीरितिवत् पथीः पथ्यौ पथ्य इत्याद्युदाजह्रुस्तच्चिन्त्यम् । सावात्वस्य दुर्वारत्वात् । यत्तु पथिमथ्यृभुक्षामिति नान्तप्रकृत्यनुकरणमेतदिति । तदप्यनर्थकम् । एकदेशविकृतन्यायस्य दुर्वारत्वात् । पन्था इत्यत्रापि नित्यत्वाद् विशेषविहितत्वाच्च पूर्वमात्त्वे कृतेऽनान्तत्वेन न्थादेशाप्रसङ्गाच्च ।

---

पेक्षनादेशापेक्षयाऽन्तरङ्गत्वाद्यणेव स्यादिति वाच्यम् । प्रातिपदिकस्याप्यत्र प्रकृतित्वेन हलादेरपि तन्निमित्तत्वेन यण्प्रकृतितन्निमित्तव्याप्यत्वाभावात् 'तदोः सः सौ' इति सूत्रेऽनन्त्ययोरित्युक्त्या तत्प्रत्याख्यानाय भाष्यकृताऽदस इति योगविभागकरणेन च तादृशान्तरङ्गत्वस्य सर्वत्रानाश्रयणाद्धेति बोधनात् । सावात्वस्येति । न्थादेशस्याप्यु-

---

एतादृशार्थबोधिकायाः प्रवृत्तिस्तु 'रुदादिभ्यः सार्वधातुक' इत्यत्र स्फुटा । तत्राहि रुदादित्वं सार्वधातुकत्वञ्च निमित्ततावच्छेदकम्, तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानम्प्रत्ययस्य प्रत्ययत्वज्ञानञ्चावश्यकमिति यासुडन्तरङ्ग. एतन्निमित्त-तावच्छेदकधातुत्वप्रत्ययत्वरूपसामान्यधर्मनिष्ठव्यापकतानिरूपितव्याप्यता रुदादित्वसार्वधातुकत्वयोरस्ति, वस्तुतस्तु तत्र नित्यत्वाद्यासुडित्येव । नत्वन्तरङ्गत्वात् विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावात्, अत एव भाष्यकृतैतादृशान्तरङ्गबहिरङ्गभावस्यासिद्धपरिभाषाप्रवृत्तौ हेतुता नोक्ता, न भाष्यानुक्तत्वमात्रन्तादृशान्तरङ्गबहिरङ्गभावस्यानाश्रयणे बीजङ्किन्तु भाष्यान्तरमपि तत्र बीजमित्याह—तदोः सः सावितीति । तत्राहि विभक्तित्वरूपसामान्यधर्मावच्छिन्ननिमित्तकमत्वं तदोरिति तु साविति विशेषापेक्षमिति यथाश्रुतार्थकया तया परिभाषया ऽत्वस्यान्तरङ्गतया पूर्वम्प्रवृत्तावनन्त्यस्यैव भविष्यतीत्यनन्त्ययोरिति व्यर्थं स्यात् । एवं योगविभागेन गुरुभूतेन तत्प्रत्याख्यानमपि वृथा स्यात्, उक्तरीत्याऽनन्त्यस्यैव सिद्धेरिति भावः । सर्वत्रेति एवमुक्तिस्तु कैयटेन "अनुदात्तङित" इतिसूत्रे ल्यादेशानापूर्वम्प्रवृत्तये एषोक्तेत्यभिप्रायेण । यत्तु आत्वात्मके सुब्विधौ नलोपस्यासिद्धत्वे नस्यात्वे पन्था इति रूपमिति तन्न सुपि यो विधिर्नकारेण स्वसत्तया प्रतिबध्यते तस्यैव तत्र ग्रहणात्स्वरसाहचर्येण तादृशस्य पूर्वमुपस्थितत्वात्, "थोन्थ" इत्यस्य प्रवृत्तिप्रतिबन्धकानुपलम्भेनात्वमात्राभिधाने न्यूनतेत्यत आह—न्थादेशस्येति । वैयात्यादिति धार्ष्ट्यादित्यर्थः । नात्रातिदेश इति अल्विधावेकदेशविकृतन्यायप्रवृत्तिरप्यनिष्टेति तद्भावः । एतदयुक्तम्, नान्त-

यदप्याहुः--अल्लोपस्य स्थानिवत्त्वान्नात्वादि । क्वौ लुप्तं न स्थानिवदिति नेहाश्रीयते इति । तदपि चिन्त्यम् तथा सति यणप्रसङ्गात् । स्यत्यादिति सूत्रे सुखीः सुतीरित्यादिनिर्वाहाय क्वौ लुप्तं न स्थानिवदित्यस्य कैयटादिभिराश्रितत्वात् । इतोऽदित्यत्र तपरकरणं कुर्वतः सूत्रकृतोऽपि इहानुकूलत्वाच्च । तस्मादात्त्वं न्थादेशश्च न्याय्य एवेति स्थितम् । एतेन मथीः मथ्यौ मथ्य इत्याद्यपि प्रत्युक्तम् । मन्थाः मन्थियौ मन्थिय इत्यादेरेव न्याय्य-

---

पलक्षणम् । यदि वैयात्यान्नात्रातिदेश इति वदेत्तत्राप्याह-पन्था इति । न्थादेशेति । अत्त्वस्याप्युपलक्षणम् । नात्वादिति । न च न. पदान्तेति निषेधः । अनान्ततया 'नः क्ये' इति नियमेन संज्ञाविधौ नलोपासिद्ध-त्वेन चेकारान्ते पदत्वाभावात् । एतेन पदान्तत्वात् 'इकोऽसवर्णे' इति ह्रस्वेऽत्त्वं दुर्वारमित्यपास्तमिति भावः । आश्रितत्वादिति । तत्प्रकृतिक-सख्युरिति रूपे ङसिनिमित्तो यण् । क्यजकारनिमित्तकत्वे हि क्विनि-मित्तकलोपापत्तिः । ङसिनिमित्तकस्य तु बहिरङ्गत्वेनासिद्धत्वान्न

प्रकृत्यनुकरणेऽपि नान्तानाम्पथ्यादीनामित्यर्थे मानाभावेन विकृतावयवनिबन्धन-कार्याभावेन तेन न्यायेन पथिन्शब्दत्वातिदेशस्य दुर्वारत्वात् न्यूनतापरिहारायाह—अत्वस्येति । निषेध इति पदस्यान्तः पदान्त इत्यर्थाभिप्रायेणेयमाशङ्का । अनान्ततयेति सम्प्रतीत्यादिः । पदत्वाभावादिति कार्यकालपक्षाभिप्रायेणेदम् । नचाकडाराधिकारस्थभपदसञ्ज्ञाविषये यथोद्देशपक्षस्यैव स्वसिद्धान्ते सत्वेनेदमस-ङ्गतमिति वाच्यम् ? यत्र तदधिकारीयसञ्ज्ञाद्वयप्रसक्तिस्तत्र यथोद्देशस्यैवाश्रयण-मिह तु न तथेत्याशयात् । अत्र उक्तरूपेषु । वस्तुतस्तु पदे ऽन्तः पदान्त इति भाष्यकारीयोक्त्या परपदस्थाजादेशस्यैव स्थानिवत्वस्य तेन सूत्रेण निषेधादेतत्सर्वं प्राचीनरीत्येति न कापि क्षतिः. इह तद्रीत्या ग्रन्थसङ्गमनमिति बोध्यम् । सखी यतः सख्युरिति भाष्यकारोक्त्यभिप्रायेणाह—तत्प्रकृतिकेति । यण् एरनेकाजिति यण्, अकारलोपस्य स्थानिवद्भावादाह—क्यजेति । अधुना यण्तु "इको यणचि" इति बोध्यः । नचास्मिन्कर्तव्ये क्विनिमित्तकयलोपस्य बहिरङ्गासिद्धत्वं स्यादिति वाच्यम् । बहिरङ्गपरिभाषाया अनित्यत्वात् । लोपापत्तिः "लोपो व्योः" इति लोपापत्तिः । नच स्थानिवद्भावयलोपे तन्निषेधादपूर्वविधित्वाच्च निमित्तकस्य त्विति

त्वात्। यदपि ऋभुक्षीः ऋभुक्ष्यौ ऋभुक्ष्य इत्यादि। तत्र सावात्वं दुर्वारमित्युक्तमेव। औङादिषु यण् तु दुर्लभः संयोगपूर्वकत्वात्। तस्मात् ऋभुक्षाः ऋभुक्षियौ इत्यादि बोध्यम्।

"ष्णान्ता षट्"। स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम्। तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपरं सम्पद्यत इत्याशयेनाह—संख्येति। यत्तु प्राचा उपदेशकाले षान्ता नान्ता चेत्युक्तम्। तत्पञ्चेत्यत्र नलोपे कृतेऽपीत्यादिस्वग्रन्थविरुद्धम्। सम्प्रत्यनान्तत्वेऽपि उपदेशे नान्तत्वमासीदिति

---

लोपः। स्थानिवत्त्वे हि व्यवधानात्तन्निमित्तकोऽपि न स्यात्। अनुकूलत्वाच्चेति। आत्वादिप्रवृत्तिप्रतिबन्धकन्यायानामनित्यत्वेनैतद्विषयेऽप्रवृत्तिबोधकतयेति भावः।

विशेषयितुमिति। विशेष्यसाकाङ्क्षत्वात्तस्येति भावः। तत्सामर्थ्याच्चेति। ष्णान्तेत्यनेन विशेषणसामर्थ्यादित्यर्थः। संख्याशब्देतरत्वासम्भवादिति भावः। इहेति। अनुवृत्तमिति शेषः। संज्ञिपरमिति। यद्यपि संज्ञिषु बहुगणवतुडतिष्वपि तदसम्भवस्तथापि लोके संख्याप्रकारक-

---

यण इति शेषः। इदञ्च क्वावुपसङ्ख्यातमिति वार्तिकाभिप्रायेण। अन्यथा ङसिनिमित्तकस्य वल्परत्वन्नास्तीति लोपस्य प्राप्तेरेवाभावेनेदमनुपपन्नं स्यात्। वार्तिकप्रत्याख्यानं तु "वेरपृक्तस्य" इति सूत्रे वेरिति योगं विभज्य तत्र व्योरित्यनुवर्त्य विप्रत्ययान्तयोर्व्योरिति व्याख्यानेन लोपो बोध्यः। स्थानिवत्त्वेहीति क्यजल्लोपस्येत्यादिः। व्यवधानादिति तेनैव व्यवधानादित्यर्थः। तन्निमित्तकः ङसिनिमित्तक इत्यर्थः। तस्माद्भाष्यप्रामाण्यात्क्यजाद्यल्लोपे स्थानिवद्भावप्रवृत्तिरावश्यकीति भावः। आत्वादिति आदिना त्वन्थादेशयोः सङ्ग्रहः। न्यायानामिति अभिव्यक्तेति न्यायस्येत्यर्थः। न्यायानामिति बहुवचनं स्थानिवद्भावसङ्ग्रहाय। एवञ्च क्वौ लुप्तमिति न सार्वत्रिकम् किन्तु क्वौ विधिप्रतीत्येव तु तथेत्यपि बोध्यम्।

मूले स्त्रीलिङ्गनिर्देश इति बहुव्रीह्युत्तरस्त्रीलिङ्गनिर्देश इत्यर्थः। अत एवाह—विशेष्येति। सञ्ज्ञिपरमित्यत्र यः सञ्ज्ञाशब्दः स एतच्छास्त्रीयसञ्ज्ञापरो भविष्यति कृत्रिमाकृत्रिमन्यायात्। तथाच न तद्बोध्यार्थस्य ष्णान्तत्वमित्याशङ्क्ते—यद्यपीति। तत्वेन सञ्ज्ञित्वेन, विवक्षिता इतीति "उभयगतिरिह भवति"

किमासिद्धत्वेन । नन्वयं पूर्वापरविरोधः काशिकायामपि तुल्य इति चेत् किं ततः ।
"बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बोध्यताम्" इति न्यायात् ।

यत्तु व्याचख्युः उपदेशकाले यौ षकारनकारौ तदन्तेत्यर्थः । देवदत्तस्य गुरुकुलमितिवत् समुदायेन सम्बन्धान्नासमर्थमास इति । तदापाततः । अवयवेन सम्बन्धं व्याख्याय समुदायेन सम्बन्धादित्युक्तेः परस्परव्याघातात् । किं च यत्रोपसर्जनपदार्थः ससम्बन्धिकस्तत्र द्वयीविधा । सापेक्षोऽपि समस्यत इत्येका । प्रधानपदार्थस्यैव कुलादेगु(१)र्वादिनेव देवदत्तादिनाऽपि सम्बन्धः । स च गुरुणा सह उत्पत्तिगर्भो देवदत्तेन सह तु तदीयगुरूत्पाद्यत्वरूपो गुरुघटित इति द्वितीया विधा । उक्तं च हरिणा—

---

बोधजनकाः पञ्चादय इह तत्त्वेन विवक्षिता इति बोध्यम् । किमसिद्धत्वेनेति । नलोपे कृते ऽपोत्यादिग्रन्थप्रतिपादितेनेति भावः । बाधे—दूषणे । अवयवेनेति । ष्णान्तपदावयवेन षकारनकारेणेत्यर्थः । समुदायेन—ष्णान्तपदेन । ससम्बन्धिकः—नित्यं सम्बन्ध्यन्तरसापेक्षो यथा गुर्वादिः । सापेक्षोऽपीति । सापेक्षस्यसमासे हिं ततो बोधाभावो बीजं । न च नित्यसापेक्षे तद्बीजमस्तीति भावः । तदेवाह—वाक्यवदिति ।

---

इति परिभाषयेति शेषः । प्रतिपादितेनेति स्त्रीप्रत्ययप्रकरणस्थेनेति शेषः । मूले बाधे दृढ इति अत्र बाधे दृढ इति छेदः । तत्र तन्त्रान्तरीयप्रसिद्धिविषयबाधस्यानुपयोगादाह—दूषण इति । ननु विशेषणस्य विशेष्यसम्बन्धित्वात् सर्वत्र ससम्बन्धिकत्वमत आह—नित्यमिति नित्यसापेक्षस्थले समासस्य प्रवृत्तौ बीजन्दर्शयति—सापेक्षस्येति । ततः वाक्यात् पूर्वार्द्धोक्तेऽर्थे साधकमाह—तदेवा-

---

१ गुरोर्यथा उत्पाद्यत्वसम्बन्धेन कुले विशेषणता तथा देवदत्तादेरपि स्वनिरूपितगुरुत्ववदुत्पाद्यत्वसम्बन्धेन कुले पदान्वयः । तथा च "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यत्र सामान्याप्रयोगग्रहणज्ञापकात् 'राजपुरुषः सुन्दरः' इति वत् प्रधानस्य सविशेषणत्वेऽपि समासो भवत्येव ।

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ इति ॥
समुदायेन[1] सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥ इति च ॥

अत्र उपसर्जनं न ससम्बन्धिकम् । येन द्वयी विधाऽवकाश-मासादयेत् । नन्विहाप्यन्तशब्दः ससम्बन्धिकार्थोऽस्तीति चेत् । उपदेशकाले यौ षकारनकाराविति वदद्भिस्तदन्वयस्य त्यक्तत्वात् । अन्यथा हि उपदेशकालेऽन्तौ यस्येति वक्तव्यं स्यात् । वस्तुतस्तु तदपि न । अन्तशब्दो हि अवयविनि साकाङ्क्षो न तु यत्र कुत्र चित् । अन्यथा ऋद्धस्य राजपुरुष इति स्यात् । राज्ञोऽपि ईशितु-रीशितव्यं प्रति साकाङ्क्षत्वात् "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रि-यशक्रयो" रिति कोशात् । यदि तु ऋद्धं प्रत्यनाकाङ्क्षतेति ब्रूषे तर्हि समं प्रकृतेऽपि **संनिपातेति** । तथा चोपदेशकाल इति व्या-

---

व्यपेक्षा—आकाङ्क्षा । अवयवान्—गुर्वादीन् । संस्पृश्य युज्यन्ते इत्यस्य तद्द्वारकसम्बन्धेन युज्यन्त इत्यर्थः । उपसर्जनम्—गौणपदम् । न ससम्बन्धिक न सम्बन्ध्यंशे नित्यसाकाङ्क्षम् । साकाङ्क्षो—निन्य

---

हेति । व्यपेक्षालक्षणसामर्थ्यस्य वाक्य एव सम्भवादाह—आकाङ्क्षेति । तथा-चैतादृशस्थले बोधो भवत्येवेति न वृत्तिप्रतिबन्धः । गुर्वादीनिति गुरुकुलेति समुदायावयवत्वञ्च गुरोः समुदायजन्यशाब्दबोधीयविशेष्यतानिरूपितविषयताश्रय-त्वात् । एवञ्चैतादृशस्थले चैत्रादिपदादिपदार्थस्य धर्मिपारतन्त्र्येण कुलेनान्वयस्वीकारेण यद्यपि निर्वाहः संस्पृश्येत्यक्षरस्यञ्चोपपद्यते, तथापि स्पष्टप्रतिपत्तये आह—तद्-द्वारकेत्यादि गुरुद्वारकसम्बन्धश्च स्वीयगुरुत्पाद्यत्वरूपो बोध्यः । वस्तुतस्तु

---

१ समुदायार्थेन गुरुकुलादिना येषाम् = देवदत्तादीनां सम्बन्धस्ते = देवदत्तादयोऽवयवान् = गुर्वादीन् संस्पृश्य = सम्बन्धघटकतयाऽभ्यन्तरीकृत्य तद्वता = गुर्वाद्यवयवविशिष्टेन कुलादिना सहयुज्यते = सम्बध्यन्त इत्यर्थः । नित्यसाकाङ्क्षत्वञ्च सम्बन्धिविषयकोत्थिताकाङ्क्षा-प्रयोजकत्वम् ।

ख्यानं निष्फलमपीति भावः । यत्त्वाहुः । परिभाषाया अनित्यत्वात् लुक् स्यादिति । तत् साहसमात्रम् । इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया निष्फलत्वापत्तेः । किं चोपदेश इति निर्मूलमपि । यत्तु वदन्ति अन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यते इति । तदपि न । संख्येत्यस्याकर्षणेन संज्ञिपरत्वसम्पादनेन च सामर्थ्योपक्षयात् ।

"**नोपधायाः**" । नेति लुप्तषष्ठीकमङ्गस्य विशेषणम् ॥ **गौणत्वे त्विति** ॥ बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः ॥ **प्रियपञ्चामिति** । ञकारद्वयमध्ये चकारः ।

---

साकाङ्क्षः । ईशितव्यम्—प्रजभूम्यादि । समं प्रकृतेऽपीति । अन्तशब्दस्य उपदेशकालं प्रति न नित्य( १ )साकाङ्क्षतेति भावः । संज्ञिपरत्वेत्यादि । संख्यापदस्येत्यादिः । अन्तग्रहणं समाससम्पादनद्वाराऽन्यपदार्थबोधकत्वेन तत्सम्पादकमिति भावः । किं चान्तग्रहणस्य तदर्थत्वे तस्य विशेषणतया सप्तम्यन्तत्वेन च पूर्वनिपातापत्तिः । उणादीनामव्युत्पत्तिपक्षे प्रत्ययानां समुदायानां वोपदेशाभावेन त्वदुक्तार्थासङ्गतिश्चेत्यपि बोध्यम् उपदेशग्रहणं कर्त्तव्यमिति वार्त्तिकस्य तु स्वप्रकृतिकप्रत्ययोपदेशकाले षणान्तेत्यर्थः । त्वया तु समस्तान्तपदार्थभूतस्य उपदेशकालस्य तथाऽन्वयो वक्तुमशक्य इति स्पष्टमेवेति दिक् ।

---

नित्यसाकाङ्क्षत्वमेव, नैतादृशरीत्याऽन्वयेऽपि वृत्तिप्रयोजकं किन्तु गमकत्वमेवेत्यन्यत्र निरूपितम् । इहोपसर्जनस्यान्तपदस्य तथात्वादाह—षणापदमिति नित्यसाकाङ्क्षत्वमेवैतादृशस्थले समासप्रयोजकमित्येतेन दर्शितम् । नित्यसाकाङ्क्षत्वञ्च सम्बन्धविषयकोत्थिताकाङ्क्षाप्रयोजकत्वम् । एतेन यादृशस्थले नोत्थिताकाङ्क्षा किन्तूत्थाप्या तत्र न समास इति दर्शितम्भवति । राज्ञः पुरुषस्य धनमित्यादौ यथा । मूले सङ्ख्येत्यस्येति अन्तपदाभावे षणाइत्येव यद्युच्येत तदा पदान्तरसन्निधानाभावेन बहुव्रीह्यर्थस्यालाभः स्यात् । षणापदोपादानसामर्थ्यादिदम्पदं षकारनकारान्तस्त्रीशब्दबोधकमिति यदि ब्रूषे, तर्हि तादृशशब्दमात्रस्य ग्रहणापत्तिः । एवञ्चातिषडादिशब्देऽतिप्रसङ्ग इत्यन्तपदं सूत्रे सार्थकम् । एतदेवाह—अन्तग्रहणमित्यादिना । तत्सम्पादकम् आकृष्टस्य संख्यापदस्य तदन्तत्वासम्भवेन तस्य तत्संज्ञिपरत्वसम्पादकम् ।

---

१ यदर्थं प्रति यस्य नित्यसाकाङ्क्षता तस्यैव तत्रान्वय इति भावः ।

"अष्टन आ" ॥ हलादाविति । रायो हलीत्युत्तरसूत्राद्धलीत्यपकृष्यते । तच्च विभक्तेर्विशेषणमिति भावः । तेनाष्टानामित्यत्र नुटः पश्चादेव संनिपातपरिभाषाया अनित्यत्वादात्वं, न तु प्राक् । अन्यथा, अष्टन् आमिति स्थिते परत्वान्नित्यत्वाच्च आत्वे कृतेऽना-

हलीत्यपकृष्यत इति । हलीत्युभयोः शेष इति भाष्योक्तेरिति भावः। संनिपातेति । नान्तत्वप्रयुक्तपदसञ्ज्ञकसंनिपातेन जातस्य नुटस्तद्विघातकत्वमिति प्राप्तिः । अनित्यत्वादिति । न च (१) नुटि नोपधाया इति दीर्घे नलोपेनाष्टानामित्यस्यसिद्धेः किमनित्यत्वेन । न च नलोपस्यापि संनिपातपरिभाषयाऽप्राप्तिः नलोपस्याऽसिद्धत्वेन तद्विषये तदप्राप्तेरिति वाच्यम् । कृन्मे (२) जन्तसूत्रभाष्ये संनिपातपरिभाषादोषनिरूप-

---

ननु स्वरितत्वं संख्यापदस्य कल्प्यताम् शब्दाधिकारश्च कल्प्य इति प्रकृतसूत्रे ऽन्तपदाभावेऽपि तत्सम्पादनीयार्थलाभेऽन्तपदमुक्तार्थगमकम्भविष्यतीत्यत आह— क्विञ्चेति । तदर्थत्वे उपदेशकाले इत्यर्थकत्वे, पूर्वनिपातप्रकरणस्यानित्यत्वेऽप्याह— उणादीनामिति । नन्वेवंसत्युपदेशग्रहणङ्कर्तव्यमिति वार्तिकासङ्गतिरत आह—उपेति । स्वप्रकृतिकेति षकारनकारान्तप्रकृतिकेत्यर्थः । ननु मयाप्येवं सुवचमत आह—त्वयात्विति ।

हलीत्यस्यापकर्षे प्रमाणमाह—हलीत्युभयोरिति । नुटि कृते कथं सन्निपातपरिभाषाप्रवृत्तिरत आह—नान्तत्वेत्यादि । ननु सन्निपातपरिभाषाया अनित्यत्वादात्वमिति स्वीकारो व्यर्थः, इष्टस्याष्टानामित्यस्य प्रकारान्तरेण सिद्धेरित्याशङ्कान्निराचष्टे—नचेति । वाच्यमिति परेणान्वयः सन्निपातपरिभाषयाऽप्राप्तिरिति नान्तसन्निपातेन पदसंज्ञायान्नुटि सति भसञ्ज्ञाप्रतिबन्धेन पदसञ्ज्ञाप्रवृत्तिस्ततो नलोपस्य प्राप्तिरिति परम्परया नुड्विषये सन्निपातपरिभाषाप्राप्तिरिति भावः । असिद्धत्वेनेति सन्निपातपरिभाषायाः कृन्मेजन्त-

---

१ नचेत्यस्य वाच्यमित्यनेनान्वयः ।

२ ननु नलोपस्यासिद्धत्वम् परिभाषादृष्ट्या उत संनिपातलक्षणतुग्विधि दृष्ट्या ? तत्राद्ये आह—कृन्मेजन्त इति—कृन्मेजन्तसूत्रे परिभाषोक्तेः परिभाषास्तत्रत्यतया, 'त्रिसृणाम्' इत्यत्रान्तरङ्गत्वान्ङीपि दीर्घे फलाभावेन 'न तिसृ' इत्यस्याप्राप्तयातद्वैयर्थ्येन ज्ञापिततया तत्रस्थत्वेन वा परिभाषा दृष्ट्या नलोपस्यासिद्धतयाऽसिद्धत्वातिदेशसिद्ध संनिपात-विघाताभावमादाय परिभाषाया अप्रवृत्तौ भाष्येऽनित्यत्वोदाहरणे "हे गौरि" इत्यत्रापि स्थानिवत्त्वेन संनिपातविघाताभावात् परिभाषाया अप्राप्त्याऽनित्यत्वोदाहरणं विरुध्येत ।

न्तत्वे षट्संज्ञाभावान्नुट् न स्यात् । न च यथोद्देशपक्षेऽन्तरङ्गत्वात् प्रागेव कृता षट्संज्ञा एकदेश विकृतन्यायेन कृतात्वेऽपि सुलभेति

---

णावसरे हे गौरीत्यादौ सम्बुद्धिलोपेऽपि तस्य स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्तत्रातिव्याप्तिपरभाष्यासङ्गतेः । संनिपातस्याशास्त्रीयत्वान्न स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति विभावय । किञ्च पूर्वत्र कर्त्तव्ये तदसिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः । अन्यथा-हलीत्यस्यात्राऽसम्बन्धे । परत्वादित्यभ्युच्चयः । नित्यत्वाच्चेति । कार्यकालपक्षे संज्ञायास्तत्तद्विधेयकवाक्यतया षट्त्वात्वयोर्बहिरङ्गत्वं समानमिति भावः । अल्विधाविति । षट्संज्ञाया

---

सूत्रभाष्ये पाठेनास्याः सपादसप्ताध्यायीस्थत्वादिति तद्दृष्ट्या सन्निपातविघातकशास्त्रासिद्धत्वेनेत्यर्थः । अत्रासिद्धत्वङ्किम्परिभाषादृष्ट्या, उत सन्निपातनिमित्तकनुड्विधिदृष्ट्या, इति वितर्क्य दूषणम्प्रथमपक्षे दोषमाह—कृदिति । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वपक्षाभिप्रायेणाह—स्थानीति । अभावादित्यान्तस्याङ्गतौ हेतुत्वम् तत्र गौरीत्यादौ । भाष्येति नदीह्रस्वत्वं सम्बुद्धिलोपस्येति भाष्येत्यर्थः । यदि दोषनिरूपणपरभाष्यसङ्गमनाय तत्राशास्त्रीयत्वं स्थानिवद्भावरूपातिदेशस्याप्रवृत्तौ हेतुस्तर्हीहापि नलोपस्यासिद्धत्वातिदेशः कथमिति परिभाषादृष्ट्याऽसिद्धत्वमप्रयोजकमिति भावः । द्वितीये आह— किञ्चेति । तत्र कृते पूर्वस्मिन् कृते, एवञ्च नुट्प्रवृत्त्युत्तरकालिकप्राप्तिकर्तृकनलोपशास्त्रस्य नुटम्प्रत्यसिद्धत्वस्याप्राप्तिरेवेति सन्निपातपरिभाषाया अनित्यत्वेनैव नलोपो वाच्य इति चेन्न लोपस्यासिद्धत्वेन परिभाषाया अनित्यत्वादात्वमिति युक्तमिति भावः । नन्वेवं षट्सञ्ज्ञाया अपि कृताकृतप्रसङ्गित्वेन नित्यतया नित्यत्वादित्यसङ्गतमत आह—कार्यकालपक्ष इति । तथाच षट्सञ्ज्ञाया नुडेकवाक्यतापन्नत्वेन तत्कालप्रवृत्तिकतया आत्वे कृते न षट्सञ्ज्ञैकवाक्यतापन्ननुडप्राप्तिरिति कृताकृतप्रसङ्गित्वमधुना आत्वस्यैवेति तस्यैव नित्यत्वम् । नच नित्यादप्यन्तरङ्गस्य बलवत्त्वमित्यपरनिमित्तकत्वेन षट्सञ्ज्ञान्तरङ्गा आत्वात्प्राग् भविष्यतीति वाच्यम् । कार्यकालपक्षे षट्सञ्ज्ञाया

---

नुड्विधायकशास्त्रदृष्ट्याऽसिद्धत्वे आह—किञ्चेति । नुटि कृते । 'मत्प्रवृत्त्युत्तरं प्रवर्तमानेन मदीयसन्निपातविघातकातिरिक्तेन यद्बोध्यते तदपि साधु' इति कल्पिताभ्यनुज्ञावाक्येननुट्सन्निपातविघातकनलोपाप्राप्तया "पूर्वत्र" इत्यनेन नलोपस्य नुड्विधायकदृष्ट्याऽसिद्धत्वेन नलोपे जातेऽपि सन्निपातस्याविघात एवेति वक्तुमशक्यम् "पूर्वत्र" इत्यनेन कृते पूर्वस्मिन् परस्यासिद्धत्वप्रतिपादकत्वाभावादित्याह किञ्चेति ।

वाच्यम् । अल्विधौ उक्तन्यायायोगादिति भावः ।

"**अष्टाभ्य औश्**" ॥ कृताकारादिति । ननु हलीत्यपकृष्यत इत्युक्तं, तत् कथं कृताकारतेत्यत आह–**अष्टभ्य इति** । कृतात्वस्येदमनुकरणं, न तु लक्षणवशसम्पन्नमात्वम् । तथा हि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थमष्टभ्य(१)इत्येव ब्रूया-

अल्विधित्वेन तन्मूलककार्याणामप्यल्विधित्वमित्यभिमानः । यदि तु नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाभावेन तत्प्रयुक्तकार्यस्य नुडादेरपि नाल्विधित्वमिति स्थानिवत्त्वेनैकदेशविकृतन्यायेन च नुट् सुलभस्तर्हि मुख्ये कार्यकालपक्षे

---

नुडेकवाक्यतया तस्य च प्रकृतिप्रत्ययोभयसापेक्षया आत्वसमलक्षतया षट्त्वमपि बहिरङ्गमित्याशयात् । ननु कार्यकालपक्षे लक्ष्यासिद्धिश्चेत्तर्हि यथोद्देशपक्ष एवास्त्वित्याशङ्कामिराचष्टे—मूले नचेति । सुलभेति तथाच नुड् भविष्यतीति शेषः नुड्विधायकशास्त्रस्य नाल्विधित्वमितिचेत्तत्राह-षट्सञ्ज्ञाया इति । अल्विधित्वमिति तथाचैतत्पक्षेऽपि हलीति प्रकृतसूत्रेऽपकृष्टव्यमिति भावः । अभिमानपदसूचितामरुचिम्प्रकटयति—यदित्विति । अत्र रूपस्येत्यन्तम्परिचायकं षट्त्वस्य । ननु विशेषणन्तेन स्थानिवद्भावस्य षट्त्वबुद्धिसम्पादनायापेक्षा । ननु तादृशविशेषणविशिष्टषट्त्वसम्पादनायेति विशेषणतयाऽलाश्रयणमस्त्येवेति न शङ्क्यम्, स्थानिवत्त्वेनेति 'सर्वे सर्वपदादेशा' इति न्यायेनादेशकल्पनया स्थानिवत्त्वेनेत्यर्थः । तदभावेऽप्याह—एकदेशेति । एतेन षट्त्वमात्रसन्निपातनिमित्तक इह नुट् स च न सन्निपातपरिभाषाया इह प्रवृत्तिसम्पादकः आत्वनलोपयोः षट्त्वाविघातकत्वादिति मूलोक्तस्य सन्निपातपरिभाषाया अनित्यत्वस्य नोपयोग इति

१ मूलेऽष्टभ्य इत्येवेति—'अष्टाभ्यः" इति सूत्रे कृतात्वानुकरणादुभ्यसोर्निर्देशेन 'अष्टाशब्दात्परयोजश्शसोरौश्विधानेन जस्शसोरात्वाप्राप्त्या व्यर्थं सत्तत्रात्वं ज्ञापयतीति भावः । न च कृतात्वनुकरणे प्रमाणाभावः, भाष्यस्यैव मानत्वात् । तथाहि—"अथेह कस्मान्न भवत्यौश्त्वम् । अष्ट तिष्ठन्ति, अष्ट पश्येति । आत्वन्तु यत्रतत्रौश्त्वम् । यत्रैवात्वं तत्रैवौश्त्वेन भवितव्यम् । कुत एतत् । यथाह्यस्य ग्रहः कृतः । तथाहि आत्वभूतस्य ग्रहणं क्रियते "अष्टाभ्यः" इति । न नु च नित्यमात्वम् । एतदेव ज्ञापयत्याचार्य्यः विभाषा आत्वमिति । यदयमात्वभूतस्य ग्रहणं करोति 'अष्टाभ्यः' इति । इतरथा 'अष्टनः' इत्येव ब्रूयात् । पर्य्यायवाचकशब्दानाम्" इति परिभाषा तु नोपतिष्ठते, ज्ञापकसाजात्या, भाष्यप्रामाण्येन चानादिसंकेतितेष्वेव प्रवृत्तेः ।

दिति भावः । **इदमिति** । श्रुतमनुमितं चेत्यर्थः । **अष्टनो दीर्घादिति** । दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात् । अष्टाभिः । दीर्घात् किम् अष्टभिः । मध्योदात्तमिदम् । "षट्त्रिचतुर्भ्यो हलादि" रिति बाधित्वा "झल्युपोत्तम" मित्यस्य प्रवृत्तेः । षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पद उपोत्तमम् उदात्तं स्यादिति तस्यार्थः । एवं स्थिते ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्त्वस्य नित्यत्वे व्यर्थं स्यादित्यर्थः । **पूर्वस्मादपीति** ।

तत्सिद्धिर्हलीत्यनुवृत्तेः फलमिति बाध्यम् ।

श्रुतं हलादौ, अनुमितं जश्शसोः । ह्रस्वव्यावृत्त्यर्थमिति । ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थमित्यर्थः । व्यर्थं स्यादिति । ननु ज्ञापितेऽपि व्यर्थमेव तत् । अष्टाभिरित्यत्र सावकाशस्याष्टन इति सूत्रस्याष्टभिरित्यत्र परत्वाज्झल्युपोत्तममित्यनेन बाधे, सकृद्गतिन्यायेन पुनरप्रवृत्तेरितिचेन्न । दीर्घ( २ )ग्रहणेनैव सकृद्गतिन्यायानित्यत्वस्यापि ज्ञापनात् । यद्वाऽत्र यथोद्देशपक्ष एव ज्ञाप्यते । तत्रात्वस्य बहिरङ्गतया प्राक्

ध्वनितम् । तत्सिद्धिरिति अष्टानामित्यस्य सिद्धिरित्यर्थः । हलीत्युभयोः शेष इति भाष्यमपि कार्यकालपक्षाभिप्रायकम् । अनुवृत्तेरिति अनु पश्चाद्वृत्तेः सम्बन्धस्येत्यर्थः ।

जश्शसोरिति तथाचेह ज्ञापकं सामान्यापेक्षं सामान्ये प्रमाणानाम्पक्षपातादिति भावः । पर्यवसितार्थाभिप्रायेणाह—ह्रस्वेऽन्तोदात्तेति । सावकाशस्येति कार्यकालपक्षेऽनान्तत्वेन षट्सञ्ज्ञाया अप्राप्त्या षट्त्रीत्यादेरप्राप्त्या सावकाशस्येत्यर्थः । षट्स्वरस्तु पञ्चभिरित्यादौ चरितार्थः अप्रवृत्तेरिति अष्टन इति सूत्रस्याप्रवृत्तेरित्यर्थः । कार्यकालपक्षमभिप्रेत्यैव समाधत्ते—दीर्घेति । न्यायानित्यत्वस्यापीति एवञ्च तस्यानित्यतया तदप्रवृत्तौ पुनःप्रसङ्गविज्ञानन्यायस्येह प्रवृत्तेरिति भावः । ननु पूर्वोपपादितरीत्याऽष्टभिरित्यस्य दीर्घग्रहणव्यावर्त्यता सिद्धेति तद्वैकल्पिकत्वे ज्ञापकत्वङ्कथमिति चेन्न, यावता विनाऽनुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वमिति न्यायेनोभयत्र दीर्घग्रहणस्य ज्ञापकत्वात् । अत एवाह—

१ 'यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यते' इति न्यायादिति भावः

एवञ्च प्रियाष्ट्ण इति हरदत्तोदाहृतं प्लुतं न संभवतीति भावः । न

षट्त्वे जाते नान्तसंख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्त्वस्याऽधर्मत्वाभावेन स्वरादेर्गलिविधित्वाभावात् । स्थानिवद्भावेनैकदेशविकृतन्यायेन वाऽकारान्तस्यापि षट्त्वेन तत्रापि 'झल्युपोत्तम' मित्यस्य प्राप्त्याऽष्टन्स्वरस्य तदपवा( १ )दत्वात् । तत्र पत्ते भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेणैव संज्ञाप्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणे कैयटेनोक्तत्वात् । स्पष्टं चेदं षट्संज्ञासूत्रेऽष्टनो दीर्घादिति सूत्रे च भाष्यकैयटयोः । आकारान्तस्य षट्त्वेऽप्यौशविधिसामर्थ्यादष्टावित्यत्र लुक् न ।

---

अपीति । अत्रेदम्बोध्यम् यद्युभयोर्ज्ञाप्यता स्वीक्रियते, तदा लाघवाभावात्कृतात्वस्य षट्सञ्ज्ञासत्वे आत्वस्य वैकल्पिकत्वे च तज्ज्ञापकमस्तु, एतावतापीष्टार्थसिद्धिर्भवतीति पूर्वोक्तरीत्या दीर्घग्रहणं वैकल्पिकत्वे ज्ञापकम् । कार्यकालपक्षे यदि त्विह यथोद्देशपक्ष एव ज्ञाप्यते, तदा हलीत्यस्यात्वविधायकसूत्रेऽपकर्षो न कार्यः । एवञ्च लाघवम्भवतीत्याशयेनाह—यद्वेति । अत्र षट्सञ्ज्ञायाम् पक्ष एव इत्येवकारेण सकृद्गतिन्यायानित्यत्वस्य कृतात्वस्य षट्सञ्ज्ञा भवतीति कल्पनस्य च निरासः । अस्मिन्पक्षे "अष्टनो दीर्घात्" इति दीर्घग्रहणस्यात्ववैकल्पिकत्वमात्रांशे ज्ञापकता कल्प्या बहिरङ्गतया विभक्त्युत्पत्त्युत्तरकालिकतया प्रागितिविभक्त्युत्पत्तेरिति शेषः । जात इति ततो विभक्तिस्ततआत्वमिति प्रक्रियात्र एवञ्चाष्टाभिरित्यत्रापि षट्त्रीतिसूत्रस्य प्राप्त्या "अष्टन" इतिसूत्रस्याचारितार्थ्येनापवादत्वेनाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि स्यादिति दीर्घग्रहणमिति भावः । स्वरादेरिति षट्त्रीति झल्युपोत्तममिति वा विहितस्वरादेरित्यर्थः आदिना ऽष्टानामित्यत्र नुटः परिग्रहः । स्थानिवद्भावेनेति 'सर्वे सर्वपदादेशा' इति न्यायेन समुदायस्यादेशत्वकल्पनया स्थानिवद्भावेनेत्यर्थः। एकदेशविकृतन्यायेन वेति नहीदानीन्नान्तत्वस्यापेक्षा किन्तु षट्त्वमात्रस्य। इत्थञ्च विकृतावयवत्वस्य नानयनमित्येकदेशविकृतन्या यस्य प्रवृत्तिर्भविष्यतीति भावः। ननु विभक्त्युत्पत्तेः प्राक् षट्त्वस्य न फलमत आह—तत्र पत्ते। ननु कृतात्वेऽपि चेत्षट्त्वन्तदाऽष्टावित्यत्रापि लुक्स्यादत आह—औशविधिसामर्थ्यादिति ।

१ ननु 'अष्टानाम्' इत्यत्र झलादित्वाभावेन "झल्युपोत्तमम्" इत्यस्याप्राप्तया तत्राष्टन्स्वरस्य चारितार्थ्ये नापवादत्वाप्राप्तिः, तत्रापि "षट्त्रिचतुर्भ्यो हलादिः" इत्यस्य प्राप्तया बाध्यसामान्यचिन्तापक्षाश्रयणे नाष्टन्स्वरस्यापवादत्वापत्तेः ।

नन्वेमष्टावित्यत्राष्टनस्वरस्य चारितार्थ्यम् । हलादित्वाभावेन षट्स्वरस्य तत्राप्राप्तेः । नचैकादेशे व्यपवर्गाभावः । स्वरात् पूर्वं सन्धिकार्याप्रवृत्तेरेहीत्यत्राङ्निमित्तनिघातसिद्धये "यद्धि तु पर" मिति सूत्रे भाष्ये ध्वनितत्वादिति चेन्न । एतद्भाष्यप्रामाण्यादेवाष्टनशब्दस्य (१) घृतादिपाठादन्तोदात्तत्वेन "एकादेश उदात्तेनोदात्त" इत्येव तत्रान्तोदात्तसिद्धेः । ननु प्रियाष्टाभ्यामित्यादावष्टनस्वरः सावकाशः । षट्स्वरविधायके विहितविशेषणाश्रयणेन समासे गौणे तदप्राप्तेः ।

---

एवमिति औ गुविधिसामर्थ्यादष्टावित्यत्र लुगभाव इत्यर्थ । अष्टावित्यत्र द्वितीयाबहुवचने, व्यपवर्गाभाव इति अन्तरङ्गत्वादेकादेशे षट्सञ्ज्ञकात्परत्वाभाव इत्यर्थः । अप्रवृत्तेरिति अस्य ध्वनितत्वादित्यत्रान्वयः । एही यत्रेति तत्र भाष्ये रोहावैहीनिप्रयोगे रोहावएहीनिस्थिते आङः परत्वमेहीत्यस्येति । "तिङ्ङतिङ" इति प्राप्तस्य निघातस्य "लोट्च" गत्यर्थलोटा युक्तइतिच निषेधमाशङ्क्य छान्दसत्वेन समाहितम् । कैयटश्च तत्र नित्यत्वादेकादेशे निघाताप्राप्तिमाशङ्क्य एवंविधभाष्यविचारात्पूर्वं सन्धिकार्याप्रवृत्तिरनुमीयत इत्याह नेन्द्रस्य परस्येति ।

सामान्यापेक्षं ज्ञापकमिति तदाशयः एतद्भाष्येति दीर्घग्रहणस्य ज्ञापकतापरभाष्येत्यर्थः । पाठादन्तोदात्तत्वमिति अन्यथा नूःसङ्ख्याया इत्याद्युदात्तत्वं स्यात् । तत्र अष्टावित्यत्र, नन्विति एवमपीति शेष, षट्स्वरविधायके षष्संज्ञकात्परत्वमाश्रित्य प्राप्तस्वरविधायकमत्रेत्ये, अत एव विहितविशेषणाश्रवणादेवाचाच्य इति अन्यथा शसि कृतान्तोदात्तत्वकचतुरशब्दस्य स्थाने चतस्रादेशोऽप्यन्तोदात्तः स्यात्तथाच "उदात्तयणो हल्पूर्वात्" इति स्वरः स्यात् । यदि तु शब्दान्तरप्राप्त्योभयोरनित्यत्वेन स्वरविधायकशास्त्रात्परत्वात्त्रिचतुरोरित्यस्याचिर ऋत इत्यस्यच प्राक्प्रवृत्तिस्तस्य स्थानिवत्वेन चतुरशब्दत्वाच्चतुरः शसीत्यस्य प्रवृत्तौ

---

१ अष्टन् शब्दाच्छसि 'अष्टौ' इत्यत्राष्टन्शब्दात्परस्य शस उदात्तत्वविधानाय "अष्टनः" इत्यस्य चारितार्थ्येन 'अष्टभिः' इत्यत्र परत्वात् "झल्युपोत्तमम्" इत्यस्य प्रवृत्तौ सकृद्गतिन्यायेन "अष्टनः" इत्यस्याप्राप्तया स्वांशे चारितार्थ्याभावेन आत्वस्य वैकल्पिकत्वे दीर्घादित्यस्य ज्ञापकत्वपरभाष्यासङ्गतिरेव स्यादिति घृतादिपाठेनैव 'अष्टौ' इत्यत्रान्तोदात्तत्वसिद्धया "अष्टनः" इत्यस्य चारितार्थ्याभावेन "झल्युपोत्तमम्" इत्यस्य बाधात् 'अष्टभिः' इत्यत्र ह्रस्वान्तेऽपि स्वराभावार्थं दीर्घादित्यस्य चारितार्थ्यमित्याशयपरकत्वं भाष्यस्येत्याह—घृतादीति । न च फिट्स्वरेणान्तोदात्तत्व सिद्धे घृतादित्वकल्पनं व्यर्थम् "नूः संख्यायाः" इत्यनेन फिट्स्वरं बाधित्वाऽन्तोदात्तत्वापत्तेः ।

अत एव "चतुरः शसि" इति सूत्रे "स्त्रियां प्रतिषेधो वाच्यः, चतस्रः पश्य, चतसर्याद्युदात्तनिपातनात्तत् सिद्धम्। तन्निपातनेऽपि चतसृणामिति विभक्तिस्वरः सिद्धः, षट्त्रीति सूत्रे हलादिग्रहणेन निपातनस्वरस्य विभक्तिस्वराबाधकत्वज्ञापनात्। आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यं न ह्यन्यद्धलादिग्रहणं प्रयोजयति अन्यदतश्चतसृशब्दादिति भाष्योक्तं सङ्गच्छते। अन्यथा प्रियाष्टान इत्यादेः सम्भवेन तदसङ्गतिः। अष्टौ परमाष्टावित्यादेरेकादेशस्वरेण सिद्धः। न च कद(१)ष्टावित्यादिव्यावर्त्यं संख्याप्रकारकसंख्येयविशेष्यकबोधजनकतयोत्तरपदार्थप्रधानसमासे समुदायस्यापि षट्त्वात्। स्पष्टं चेदं सर्वादी-

---

तकाराकारस्योदात्तत्वं स्यात्। आद्युदात्तनिपातनादिति समासत्वात्सूत्रेऽन्तोदात्तपाठे कर्तव्ये चतसृशब्दावयवचकारस्योदात्तस्य पाठादित्यर्थः। ननु वार्तिकारम्भे चतुरः शसीत्यस्यैवाप्रवृत्तिः निपातनेतु तस्य सर्वबाधकतया षट्त्रीत्यस्यापि बाधापत्तिरत आह–तन्निपातनेऽपीति। अपिर्वार्तिकारम्भसमुच्चायकः विभक्तिस्वरः विभक्तेरुदात्तत्वम्। निपाते हीति निपातनस्य सर्वबाधकत्वे हीत्यर्थः। चतसृशब्दादिति एतत्सम्बन्धयजादिविभक्तिवारकतयैव तस्य चारितार्थ्यमस्ति। यदि निपातनस्य सर्वबाधकत्वन्तदा तद्व्यर्थमेव स्यादिति। अयम्भावः "षट्त्रिचतुर्भ्यः" एकवचनद्विवचने न भवत एवं षड्भ्यो जश्शसोर्लुगेव अन्याः सर्वा हलादिविभक्तय एव त्रिचतुरोर्जसितु न प्रयोजनम्। अन्चेश्छन्दसीतिसूत्रादसर्वनामस्थानग्रहणस्य षट्त्रीतिसूत्रेऽनुवर्तनात् त्रीनित्यत्र शसितु "एकादेशउदात्तेन" इतिसिद्धम्। तिस्रः पश्येत्यत्र तु "उदात्तयण" इत्येव सिद्धम्। चतुरः पश्येत्यपि न व्यावर्त्यम्, चतुरः शसीत्यस्यारम्भात्। तस्माच्चतस्रः पश्येत्येव व्यावर्त्यमिति। यदि निपातनस्वरस्य सर्वबाधकत्वन्तश्चा तद्वैयर्थ्यं स्पष्टमेव। एतेन प्रकारेण निपातनस्वरस्य विभक्तिस्वराबाधकत्वे ज्ञापिते चतसृणामित्यत्र विभक्तिस्वरः सिद्ध इति। अन्यथा विहितविशेषणानाश्रयणे, तदसङ्गतिः। नह्यन्यदिति ग्रन्थासङ्गतिः। अष्टावित्याद्यपि न व्यावर्त्यमित्याह—अष्टावित्यादि। न चेति वाच्यमिति परेणान्वयः। कदष्टावित्यस्य प्रदर्शनम्, अव्ययपूर्वपदप्रकृतिस्वरस्यात्र

---

१ नन्वत्रापि समासान्तोदात्तत्वे "एकादेश" इत्येकादेशस्वरेणान्तोदात्तत्वसिद्धिरिति चेत्, न, "तत्पुरुषे तुल्यार्थ तृतीयासप्तम्युपमानाऽव्यय" इति पूर्वपदप्रकृतिस्वरविधानेन "निपाता आद्युदात्ताः" इत्यनेन कुशब्दस्याद्युदात्तत्वेन 'कदष्टन्' इत्यस्याद्युदात्तत्वात्। न च "अव्यये नञ्कुनिपातानाम्" इति परिगणनात्पूर्वपदप्रकृतिस्वराप्राप्तिः, कदित्यस्यापि स्थानिवत्त्वेन कुशब्दत्वात्।

नीत्यत्र भाष्ये । ततो विहितत्वाच्चेति वाच्यम् । एतद्भाष्यप्रामाण्येन तदनभिधानादिति चेन्न । एतज्ज्ञापकपरभाष्यप्रामाण्याद्घ्नन इत्यस्यापि विहितविशेषणाश्रयणेन समासेऽप्रवृत्तेः । प्रियाष्टादीनामनभिधानस्य षट्सञ्ज्ञासूत्रे भाष्ये स्पष्टत्वाच्च । "तिसृभ्यो जस" इति सूत्रस्थेनापसमस्तार्थमेकइति भाष्येण तुल्यन्यायात् षट्स्वरस्यापि तदन्ते प्रवृत्तेरुक्तत्वाच्च । "चतुरः शसि" इति सूत्रस्थन्तु वा(२)र्तिकं

---

प्रवृत्त्या एकादेशस्वरेणासिद्धिप्रदर्शनाय, ततः षट्संज्ञकात् । एतद्भाष्येति चतुरः शसीत्यत्रोक्तभाष्येत्यर्थः । तदनभिधानम् कदष्टावित्याद्यनभिधानम्, एतज्ज्ञापकेति दीर्घग्रहणस्य ज्ञापकतापरभाष्येत्यर्थः । वस्तुत एतत्सर्वमभ्युपेत्यवादेन सिद्धान्तंत्वनभिधानमेवेत्याह—प्रियाष्टादीनामिनि । तिसृभ्य इति तत्रहि जसग्रहणङ्किमर्थमिति प्रश्ने तिसृकेति कन्प्रत्ययान्तप्रत्युदाहरणमुक्त्वा जसग्रहणमनर्थकमन्यत्राभावादित्युक्तम् । अस्य नित्यम्बहुवचनान्ततया तदन्ययोरभाव एव शसितूदात्तयणइत्येव सिद्धम् । अन्याः सर्वा हलादयस्तत्र षट्त्रिचतुर्भ्यं इत्येव भविष्यति । तिसृकेत्यपि न प्रयोजनम् । मध्येऽपवादन्यायेन "तिसृभ्य" इत्यस्यानुदात्तौ "सुप्पिता" इत्येतद्बाधकतया नित्स्वरेण 'तिसृभ्य" इत्यस्य बाधो भविष्यतीत्युक्त्वा 'उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति, अतितिसृौ अतितिसृः' इति जसग्रहणस्य व्यावर्त्यन्दर्शितम् । यद्यपि वार्तिककृता तत्खण्डितन्तथाप्याचार्यान्तरसंवादेन जसग्रहणस्य प्रयोजनम्भाष्यकारोऽभिहितवान् । तच्च प्रयोजनं विहितविशेषणसत्वेतु नोपपद्यत इति, परत्वमेव नियामकमिति जसग्रहणाभावे विभक्तेरुदात्तत्वं स्याज्जसग्रहणसत्वेतु तस्याप्रवृत्तौ समासस्वरबाधकाव्ययपूर्वपदप्रकृतिस्वरबाधकेनातेरकृत्पदइत्यनेनातेः परमकृदन्तम्पदशब्दश्चान्तोदात्त इत्यर्थकेनान्तोदात्तत्वे कृते उदात्तस्य ऋकारस्य यणादेशे "उदात्तस्वरितयो" इति स्वरित औकारोऽकारश्च

---

२ "विभक्तिस्वरभावश्च हलादिग्रहणात्" इति वार्तिकमित्यर्थः । अयम्भावः यथा निपातनस्वरः शसि स्वरं बाधते तथा 'चतसृणाम्' इत्यत्र 'षट्त्रि" इति विभक्तिस्वरमपि बाधेतेत्याशङ्कायाम् "विभक्तिस्वरभावश्च हलादि ग्रहणात्" विभक्तिस्वरस्य च भावः सिद्धः "षट्त्रि" इति सूत्रे हलादि ग्रहणात् । आद्युदात्तनिपातने हलादिग्रहणानर्थक्यम् इति हलादिग्रहणात् विभक्तिस्वरं निपातस्वरो न बाधेतेत्याशयेन "विभक्तिस्वर" इति वार्तिकमुपन्यस्तम् । तदपि वार्तिकम् "उपसमस्तार्थमेके" इति सिद्धान्तवार्तिकेन "जस्ग्रहणानर्थक्यमन्यत्राभावात्" इति वार्तिकं यथा दूषितं तथा "विभक्तिस्वर" इति वार्तिकमपि तुल्यन्यायाद् हलादिग्रहणस्याप्युपसमस्तार्थत्वाद्दूष्यमिति ।

च पूर्वत्रासिद्धीये न स्थानिवदिति निषेधः । तस्य दोष इति साप-
वादत्वात् । ननु रषाभ्यामिति प्रतिपदोक्तं णत्वं तत्र ग्रहीष्यामः ।
न तु ष्टुत्वविधिलभ्यमिति चेत् । मैवम् । भाष्यमते तदयोगात् ।
तथा हि । रषाभ्यामिति सूत्रे "अपदान्तस्य मूर्द्धन्य" इति सूत्रमनु-
वर्त्य णग्रहणं "पदान्तस्य" इति निषेधसूत्रं च भाष्ये प्रत्याख्यातम् ।
न च मूर्द्धन्यशब्देन ष्टुशब्देन वा निर्वर्त्यमाने णकारे वैषम्यं सुवचम् ।
यथोत्तरं मुनीनां प्रामाण्यमिति स्थानिवद्भाव एवोचितः । शब्दकौस्तुभे
तस्य दोष इत्यत्र णत्व(१)ग्रहणं मास्त्विति निष्कर्षः कृतस्तद्रीत्या-

---

जस्ग्रहणानर्थक्यमन्यत्राभावादिति तिसृभ्य इति सूत्रस्थवार्तिकवदेव
दृष्यम् । एके इति च मुख्यार्थकमिति दिक् ।

प्रतिपदोक्तमिति । संयोगादिलोपसाहचर्याल्लत्वस्येवेति भावः ।
प्रत्याख्यातमिति । तदेकवाक्यतयात्रानित्यत्वेन णत्वांशे प्रतिपदोक्तपरि-

---

भवति तुल्यन्यायादिति, यथा 'तिसृभ्यो जस' इति सूत्रस्य प्रवृत्तिविषये
व्यवस्था तद्वत् अपिना अष्टनूस्वरस्य परिग्रहः ।

नन्वेवं विशेषणाश्रयणबोधकोक्तभाष्यस्य का गतिरत आह—चतुरइति ।
वार्तिकम् विभक्तिस्वरभावश्च हलादिग्रहणादित्येतत् । दृष्यमिति जस्ग्रहणस्यो-
पसमस्तार्थत्ववत्तत्र सूत्रे हलादिग्रहणस्यापि समस्ते प्रियत्रीनित्यादौ प्रयोजनला-
भाद्दृष्यम् । नन्वेवमेके इत्युक्त्वा तस्य सिद्धान्त्युक्तित्वङ्कथमत आह—एके
इतीति । दिगिति दिगर्थस्तु "चतुरः शसि" इति सूत्रस्थं "स्त्रियामप्रतिषेधो
वाच्य" इति वार्तिकमपि न कार्यम् चतस्रः पश्येत्यत्र स्वररेफादेशयोः प्राप्तौ पर-
त्वाद्रेफादेशे तस्य स्थानिवत्त्वेन व्यवधानात्तकाराकारस्य स्वराप्राप्तेः । नच रेफस्यैव
स्वरो भवत्विति वाच्यम् ? हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानवद्भावात् । नच स्थानि-

१ "तस्य दोष इति वार्तिके णत्वग्रहणम् । 'माषवपनी' इत्यत्र "प्रातिपदिकान्त" इति
प्राप्तणत्ववारणाय "पूर्वत्रासिद्धेन" इत्यस्य प्रतिप्रसवार्थम् । तत्र च कार्यकालपक्षे अन्तरङ्ग
परिभाषया "यस्येति च" इत्यलोपस्यासिद्धत्वया प्रातिपदिकान्तत्वाभावेन णत्वाप्राप्त्यैव सिद्ध-
मिति वार्तिके णत्वग्रहणं प्रत्याख्यातम् । यथोद्देशपक्षं स्वीकृत्यान्तरङ्गपरिभाषाया अप्रवृत्त्या
"पूर्वत्रासिद्धे" इति स्थानिवत्त्वाप्रवृत्त्या च 'प्रियाष्टनः' इत्यत्र णत्वस्वीकारे तु वार्तिके णत्व-
ग्रहणेऽत्रालोपस्य स्थानिवत्त्वेन णत्वाभाव इति फलभेदः स्यादित्याह फलभेद इति ।

ष्याह—कार्यकालपक्ष इति। न च यथोद्देशमाश्रित्य ष्टुत्वमस्त्विति वाच्यम्। फलभेदे प्रत्याख्यान(१)संभवेन कार्यकालपक्षस्यैवेह न्याय्यत्वादिति भावः। अत एव पञ्चमीसमासस्य प्रत्याख्यानोपष्टम्भेनापि ष्टुत्वं प्रत्याशा न कार्या। फलैक्याय कार्यकालपक्षस्यैव न्याय्यत्वे-

भागासाहचर्यपरिभाषयोरप्रवृत्तिरिति भावः। प्रत्याख्यानेन च तयोरुपादानं स्पष्टार्थमेव न तु फलान्तराभिनिवेशः कार्य इति सूच्यते। प्रत्याख्यानासम्भवेनेति। उक्तरीत्या भाष्य(२)ध्वनितणत्वग्रहणेत्यादिः। णग्रहणेति वा। पञ्चमीसमासेति। अपरविधाविति वक्तव्यमिति 'अचः परस्मिन्' इति सूत्रस्थवार्तिकव्याख्यानावसरे कैयटध्वनितेत्यर्थः। वस्तुतस्तदयुक्तमिति प्राङ् निरूपितम्। तत्प्रत्या-

वद्भावस्य स्वरे कर्तव्ये निषेधो भविष्यतीति वाच्यम्? स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवद्भावनिषेधात्। एवमाद्युदात्तयोश्चिचतुरोरान्तरतम्यादाद्युदात्ते आद्युदात्तनिपातनमपि न कार्यम्। हलन्त्यस्यापकर्षस्तु प्रतिपत्तिलाघवायेति।

वर्णग्रहणे प्रतिपदोक्तपरिभाषाया अप्रवृत्तिवादिमतेऽप्याह—संयोगादीति। तदेकवाक्यतया प्रत्याख्यानैकवाक्यतया, अत्र सूत्रे णग्रहणस्य सत्वपक्षे, यत्तु णग्रहणं संज्ञापूर्वकविधेरनित्यत्वबोधनाय। तेन दुर्भवानीत्यत्र णत्वम् एवं पदान्तस्येतिसूत्रमपि नञ्घटितमनित्यमित्येतद्बोधनद्वारा सार्थकम्। तेन हेप्राणित्यस्यासिद्धिरित्याहुस्तन्न युक्तमित्यत आह—प्रत्याख्यानेनचेति। फलान्तरेति निरुक्त्येत्यर्थः। णत्वग्रहणप्रत्याख्यानस्य भाष्यानारूढत्वादाह—णग्रहणेति।

१ अत्र केचित् फलभेदे प्रत्याख्यानासम्भवेनेत्यस्य "रषाभ्याम्" इतिसूत्रे णग्रहणतत्प्रत्याख्यानयोः वार्तिके णत्वग्रहणतत्प्रत्याख्यानयोः, पञ्चमीसमासतत्प्रत्याख्यानयोश्च फलैक्यायेत्यर्थमाहुः तत्र पञ्चमीसमासतत्प्रत्याख्यानयोरित्यर्थो न युक्तः पञ्चमीसमासप्रत्याख्यानाभावस्य शब्दरत्नकृतापूर्वं स्थापितत्वादित्याह—भाष्यध्वनितेति।

२—कार्यकालपक्षेऽपि त्रिपादीस्थेऽन्तरङ्गे परिभाषाया अप्रवृत्त्या तया वार्तिके णत्वग्रहणप्रत्याख्यानस्य भाष्यासम्मततयाऽऽह—णग्रहणेति। 'रषाभ्याम्' इत्यत्रणग्रहणप्रत्याख्यानासम्भवेनेत्यर्थः। भाष्यमते प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या "तस्य दोषः" इतिवार्तिकेन ष्टुत्वेऽपि स्थानिवत्त्वेन णत्वाप्राप्तिः। णग्रहणारम्भपक्षे तु प्रतिपदोक्तपरिभाषया वार्तिकाप्रवृत्त्या, यथोद्देशपक्षेणान्तरङ्गपरिभाषाया अप्रवृत्त्या च णत्वप्राप्तिरिति फलभेदः स्यादिति भावः। वस्तुतस्त्विदमपि चिन्त्यमेव क्वचिदपि पक्षे त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तेरिति दिक्।

नासिद्धत्वस्य दुर्वारत्वात् । 'निष्ठायां सेटि' इति सेड्ग्रहणाज्ज्ञापकात् पूर्वस्माद्विधौ स्थानिवद्भावस्यानित्यतया नेह प्रवृत्तिरिति तु संभवेदुत्प्रेक्षा यदि लक्ष्ये ण्टुत्वं प्रमितं (१) स्यात् । लक्षणैकचक्षुष्कतायां तु अनित्यत्वपुरस्कारोऽनुचित एवेत्यास्तां तावत् ।

"जश्शसोरिति" । औश्त्वं हि लुग्लुटाविव गौणत्वे (२) न भवति । अष्टाभ्य इति बहुवचननिर्देशात् । अन्यथा हि कृतात्वा-

ख्यानमभ्युपेत्यापि समाधत्ते । फलैक्यायेति । प्रत्याख्यानस्यायुक्तत्वं ध्वनयन् पञ्चमीसमासपक्षे लक्ष्यसिद्धिं शङ्कते—निष्ठायामिति । तत्र हि सेड्ग्रहणं नानिड्व्यावृत्त्यर्थं णिजन्तात्तदसम्भवात् । न च ज्ञपेः 'सनीवन्त' तीड्विकल्पात्संज्ञपित इत्यादौ "यस्य विभाषा" इतीण्णिषेधं तत्सम्भवतीति वाच्यम् । यस्य विभाषेत्यत्रैकाच इत्यनुवृत्तेः । अन्यथा द्वरिद्रातेरपि सनि विकल्पितेट्त्वेन दरिद्रित इतीण्न स्यात् । "वा दान्त" इति सूत्रे ज्ञप्ता इति निपातनेनेडभावस्येव णिलोपस्यापि निपातनाच्च । तस्मात्तद्योगविभागेन कालावधारणार्थमिटि कृते एव णिलोपो न तु ततः प्रागिति । अन्यथा कारितमित्यादौ परमपीटं बाधित्वा नित्यत्वाण्णिलोपे एकाच इतीण्णिषेधः स्यात्पूर्वस्माद्विधौ स्थानिवत्त्वे त्वप्राप्त एव निषेधो णिचा व्यवधानादिति भावः । यदि तु 'एकाच उपदेशे' इत्यत्र विहितविशेषणपक्षे सेटीति

---

कैयटध्वनितेति प्रागुक्तरीत्या कैयटध्वनितप्रत्याख्यानेत्यर्थः । अत्र कैयटेत्युपादानमरुचिबोधनायात एवाह—वस्तुत इति । प्रागिति यूष्ण इत्येतन्निरूपणावसरे इत्यर्थः । प्रत्याख्यानेति पञ्चमीसमासस्येत्यादिः । तत्सम्भवतीति अनिट्त्वं सम्भवतीत्यर्थः, विकल्पितेट्त्वेन तनिपर्तीति विकल्पितेट्त्वेन, ननु वादान्तेतिसूत्रेण विकल्पेनेड्विधानात्तदभावे णिजन्तात्तत्सम्भवतीति तद्व्यावृत्त्यर्थं सेड्ग्रहणमस्तु तत्सामर्थ्यात्पूर्वसूत्रेणापि न णिलोप इत्यत आह—वादान्तेति सिद्धान्त-

---

१ प्रमात्मकज्ञानविषयीभूतम् निश्चितमिति यावत् ।

२ चिन्त्यमिदम् 'अष्टाभ्यऔश्' इति सूत्रे भाष्ये 'विभाषा आत्वं यदयमात्वभूतस्य ग्रहणं करोति 'अष्टाभ्यः' इति । अन्यथा 'अष्टनः' इत्येव ब्रूयात् । इत्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचनस्यावश्यकतया भाष्यासङ्गत्यापत्तेः ।

नुकरणेऽपि एकवचनेनैव निर्दिशेत् । अष्टा औशिति, अष्ट इति वा । एतच्च ष्णान्तेति सूत्रे भाष्यकैयटयोः स्पष्टम् । तथा च औत्त्व-विधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वमपि प्राधान्ये एवोचितम् । तथा च जसि प्रियाष्टान इत्येव स्यान्न तु प्रियाष्टा इत्याशङ्क्योक्तं

---

चिन्त्यप्रयोजनमित्युच्यते तदा प्रत्रिगणय्येति भाष्योदाहरणादेव तदनित्यत्वम् । अन्यथा ऽल्लोपस्या स्थानिवत्त्वात् 'ल्यपि लघुपूर्वा' दिति णेरयादेशो न स्यात् । ल्यपीति सूत्रं प्रशमय्येत्यादौ चरितार्थ-मिति दिक् । स्पष्टमिति । वस्तुतस्तु 'षड्भ्यो लुक्' इत्येतत्साह-चर्यादस्य गौणे न प्रवृत्तिः । तस्य च विहितविशेषणाद्गौणेऽप्रवृत्तिरिति सर्वादिसूत्रे भाष्ये स्पष्टम् । गौणे औशोऽप्रवृत्तौ तज्ज्ञाप्यात्वमिति नेति बोध्यम् । इत्येव स्यादिति । यद्यपि हलीत्यपकर्षपक्षे प्रियाष्टाविति न सिध्यति प्रियाष्टान इति प्राप्नोतीति भाष्ये उक्तम् । तथापि अपक-र्षाभावे ऽप्यात्वस्य वैकल्पिकतया प्रियाष्टान इत्यस्य दुर्वारत्वेन यथाश्रुतभाष्यासङ्गतेरेवगर्भतया तद् व्याख्यानम् । प्रियाष्टा इतीति । आवादेशे वकारस्य 'लोपः शाकल्यस्य' इति लोपः । अत्र गौणत्वे ऽप्यौश्त्वप्रवृत्तौ हि भाष्यमसङ्गतमेवेति भावः । कैयट इति । अत्रारु-चिबीजं तु यथालक्षणमित्यस्य तत्कृता नैव वा लक्षणमप्रयुक्ते प्रव-

---

माह—यद्दिन्विति विहितविशेषणपक्ष इति, एतच्च प्राङ्निरूपितम्—भाष्यो-दाहरणादिति प्रगदय्य प्रस्तनय्येत्यस्याप्युपलक्षणम् । अल्लोपस्य स्थानिवद्भावेन तस्यैव लघुपूर्वत्वमाश्रित्य णेरयादेश इति तु न सत् पूर्वत्वस्य सावधिकत्वेनाकारस्य सम्प्रत्यश्रवणात्तादृशव्यवहारासम्भवात् । नापि स्थानिवत्त्वेन पूर्वस्य परस्य वा विधौ स्थानिवत्त्वस्य प्रवृत्तिर्नतु स्वस्यैव व्यवहाराविशेष इति स्पष्टमेव । ननु बहु-वचननिर्देशस्य साधकत्वमन्यत्र निराकृतमत आह – वस्तुत इति । इत्येतत्सा-हचर्यादिति यथा तत्सूत्रं गौणे न तथेदमपि तत्र न प्रवर्तते । नच सूत्रान्तरसाह-चर्यस्यानियामकत्वमिति दृष्टान्तादिदमसङ्गतमिति वाच्यम् । षड्ग्रहणस्य ततोऽपकर्षं कृत्वा तत्सूत्रस्थं षड्ग्रहणं वक्ष्यमाणरीत्या प्रधानीभूतार्थबोधकमितोऽपि तादृश-स्यैव बोधनमुचितमित्यभिप्रायात् । तस्य गौणे ऽप्रवृत्तिं स्पष्टयति—तस्य चेति । भाष्ये एवकारादर्शनेनैवकारघटितं व्याख्यानं भाष्यविरुद्धमित्याशङ्कानिवृत्तये—आह—यद्यपीत्यादि । अत्र न भवत्येवेति व्याख्याने युक्तेति यथालक्षणमित्यस्य लक्षण-

भाष्ये "यथालक्षणमप्रयुक्ते" इति । न भवत्येवात्रात्वमित्यर्थ इति कैयटः । वामनोऽपि "अष्टाभ्य औश्" इति सूत्रे तदन्तग्रहणात्पर-माष्टावित्युक्त्वा प्रियाष्टान इत्यत्रात्वस्याभावादौत्वं न भवतीत्याह । हरदत्तस्तु तत्रैव 'प्रियाष्टान इत्यत्र' इति वृत्तिग्रन्थमुपादाय यथा

---

र्त्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानादिति द्वितीयव्याख्यैव युक्ता । आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः । प्रयुक्तेऽपि लक्षणान-तिक्रमसत्त्वात् । प्रयुक्तानामिदमन्वाख्यानमित्यभियुक्तोक्तिविरोधाच्च । यथालक्षणमित्यस्याप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणप्रवृ-त्तेरित्यक्षरार्थः ( १ ) । किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतयैवैव व्याख्योचिता एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च । तस्मादत्रत्यं मूलं टीका चैवं-

---

मनतिक्रम्येत्यर्थः । प्रथमव्याख्यायाम् द्वितीयव्याख्यायान्तु यथेति पृथक्पदम्, अलक्षणमिति छेदः यथाशब्दो योग्यतार्थकः लक्षणाभावस्य योग्यतेत्यर्थः । आद्य-व्याख्यायां भाष्यकाराभिप्रेतत्वे दृष्यते एवैनदिति ब्रूयादिति भावः । प्रकारान्तरेण तस्य व्याख्यानस्यासाङ्गत्यमाह—आद्येति तादृशव्याख्यानमनुचितमपीत्याह—किञ्चेति । मूलकौमुदीस्थो गौणत्वेति त्यारभ्य इतीत्यन्तो ग्रन्थः टीका मनोरमा पूर्वस्मादित्यारभ्य प्रियाष्टन इतीत्यन्तो सिद्धान्तभूतद्वितीयव्याख्यानुरोधेनाह-वस्तुत इति । दिगिति दिगर्थस्तु बहुवचननिर्देशाद्गौणे नेत्येतद्व्याख्यानम् "अष्टाभ्य

---

१ 'यथालक्षणमप्रयुक्ते' इत्यस्य व्याख्याद्वयं कैयटेन प्रदर्शितम् ॥ तथाहि—'लक्षणमन-तिक्रम्य यथालक्षणमिति यथार्थेऽव्ययीभावेन यस्य लक्ष्यस्य क्वचिदपि प्रयोगो नोपलभ्यते तत्र लक्षणमनतिक्रम्य कार्यं कर्तव्यम् लक्षणेन यथा प्राप्नोति तथैव तत्स्वरूपं बोध्यमिति फलति' इति ।

यद्वा 'लक्षणस्याभावोऽलक्षणम' इत्यर्थाभावेऽव्ययीभावं कृत्वा पुनर्यथार्थेऽव्ययीभावेन अप्रयुक्तलक्ष्ये लक्षणप्रवृत्त्यभावस्य योग्यता अप्रयुक्तलक्ष्ये किञ्चिदपि लक्षणं नैव प्रवर्तते इत्यर्थः' इति च । तथा च प्रियाष्टादीनामप्रयोग एवेति भावः । वस्तुतस्तु लक्ष्ये लक्षणाभावस्य स्वत एव सत्त्वेन तदुक्तिवैयर्थ्यात् लक्षणप्रवृत्तौ लक्षणायाम्, वारद्वयमव्ययीभावस्वीकारे च गौरवादाद्यव्याख्यैव युक्ता । द्वितीयव्याख्यानन्तु सम्भवमात्रेण मतान्तरपरतयेति न कैयटमते एकस्यैव लक्ष्यस्य साधुत्वासाधुत्वप्रसङ्गः । न च 'अप्रयुक्ते' इति वाक्यशेषासङ्गतिः, अप्रयुक्तस्यैव प्रक्रान्तत्वेन तदुक्तेरविरोधात् । न च 'प्रयुक्तानामन्वाख्यानं व्याकरणम्' इत्यभियुक्तोक्तिविरोधः, प्रयुक्ता-नामित्यस्य साधूनामेवान्वाख्यानमित्यर्थेनादोषादित्यन्यत्र विस्तरः ।

पुनर्गौणतायामात्वं न भवति तथा तद्विधावेव वक्ष्यत इति प्रतिज्ञाय "अष्टन आ विभक्तौ" इति सूत्रे एकवचननिर्देशादुपसर्जनेऽप्यात्वम्, भविषयं आतो लोपः प्रियाष्टः पश्येत्यादि वदन् पूर्वप्रतिज्ञानार्थविपरीतं भाष्यवृत्त्यादिविरुद्धं कथमभिहितवानिति स एव प्रष्टव्यः। **हलादावेवेति** । यद्यपि हलीत्यस्यापकर्षमकृत्वाऽपि व्याख्यानं भाष्ये प्रतीयते । तथाऽपि तस्यापरितोषग्रस्तत्वं प्रपञ्चितमन्यत्राति भावः । प्रियाष्टा इति प्रथमैकवचनम् । उक्तं संगृह्णाति प्रियाष्टन् इति ॥ नान्ताः ॥

**भुदिति** । बुद्ध्यतेः क्विप् ॥ धान्ताः ॥

**ऋत्विग्दधृक्** ॥ **किं चिदिति** ॥ ऋतावुपपदे यजेः किन् । धृष्णोतेर्द्विवचनमन्तोदात्तत्वं च, सृजेः कर्मणि किन् अमागमश्च ।

व्याख्यातृकैयटाद्यनुरोधेन । वस्तुतः प्रियाष्टादीनामनभिधानमेवेति दिक् ।

आत्वस्याभावादौश्त्वं नेति । अत्र वृत्तिकृता औशोऽभावादात्वं नेति वक्तुं युक्तम् । प्रथमैकवचनमिति । हल्ङ्यादिलोपात् परत्वादात्वे सोलोपाप्राप्त्या रुत्वविसर्गौ । न च लोपोऽन्तरङ्गः । प्रकृतिप्रत्ययोभयसापेक्षत्वेन समत्वादित्यभिमानः ।

नलोपाभावस्त्विति । बुञ्धधातुर्नोपध इति संमताकारीयधातुवृत्त्यनु-

---

औश्" इति सूत्रस्थभाष्यविरुद्धमपि तत्रहि 'विभाषा आत्वं यद्यमाग्वभूतस्य ग्रहणङ्करोत्यष्टाभ्य इति अन्यथा अष्टन इत्येव ब्रूयात्' इत्युक्तम् । यदि कैयटोक्तरीत्या गौणेऽस्याप्रवृत्तिरिष्टा स्यात्तदाऽष्टन इत्येव ब्रूयादित्यसङ्गतं स्यादिति ।

"अष्टाभ्य" इति सूत्रस्य प्राधान्येनौशादेशविधायकत्वमेवात्वन्त्वनुमीयत इत्याशयेनाह—अत्र वृत्तिकृतेत्यादि । अन्तरङ्ग इति अङ्गाधिकारस्थभिन्नत्वादित्याशयः । समत्वादिति अत एव भाष्यकृता तदुपन्यासो न कृत इति शेषः । अभिमान इति एवङ्कथनबीजन्तु यथालक्ष्यमप्रयुक्त इत्येतत्सूचितानभिधानमेवेति प्रागुक्तम् ।

ननु "परेश्च घाङ्कयोः" इति सूत्रस्थवक्ष्यमाणभाष्यविरुद्धम्मूलोक्तन्नलोपा-

दिशेः कर्मणि । उत्पूर्वात् स्निहेः क्विन् उपसर्गान्तलोपः षत्वम् । अञ्चेः सुप्युपपदे क्विन् चेत्यर्थः । **युजेरिति** । क्रुञ्चेरप्येवम् । नलोपाभावस्त्वधिकः **कनाविति** । इकारस्तूच्चारणार्थ इति भावः । **सन्निहिते इति** । यत्तु प्राञ्चस्तृतीये धात्वधिकारे इति । तन्न । सन्निधौ धातुग्रहणस्य उत्तरत्रानुवृत्तेरभावेनाधिकारत्रयाभावात् ।

**"युजेरसमासे"** ॥ **सर्वेति** । यत्तु प्राचोक्तं सुटीति । तन्न सर्वनामस्थाने इत्यस्यैव प्रकृतत्वात् । लक्षणायां बीजाभावात् । क्लीबे युजी इति द्विवचनेऽतिव्याप्तेश्च । यत्तु वदन्ति नपुंसके शसि

---

सारेणेदम् । 'परेश्च' इति सूत्रभाष्यान्तु अयं ओपध इति लभ्यते । तत्र हि क्रुञ्चेत्यत्र कुत्वमाशङ्क्य क्रुञ्चामिति ऋत्विगादिसूत्रस्थनिपातनात्सिद्धमित्युक्तम् । तस्य नकारजत्वे तु परसवर्णासिद्धत्वात्कुत्वाप्राप्तौ भाष्यासङ्गतिः । निर्देशेन च चयोगे कुत्वाभावो निपात्यत इति क्रुङित्यादौ कुत्वं भवत्येव तदा लोपस्य प्राप्तिरेव नेति तत्त्वम् । उच्चारणार्थ इति । न तु तदित्संज्ञाप्रयुक्तकार्यभागयमतो विशिष्य तस्य नोक्ता सा । उच्चारणे सहायसम्पादनेन वर्णोच्चारणस्य चारितार्थ्ये, विधेये तदपगममात्रफलिका तु सा ऽस्त्येवेति न 'तस्य

---

भावस्त्वधिक इति व्याख्यानमत आह—क्रुञ्चधातुरिति । सम्मताकारो ग्रन्थकारविशेषः । ओपध इति उपदेश इत्यादिः, अत एव क्रुञ्च्यादौ नकारस्य श्रवणं सिध्यति नोपधत्वे नलोपः स्यात् । ननु निपातनस्य बाधकतया यदि कुत्वाभावो निपात्यते तदा क्रुङ् इत्यत्रापि कुत्वन्न स्यादत आह—निर्देशेनचेति । चयोग इति तथाच झलनिमित्तककुत्वस्याभावो निपात्यत इति । क्विन्प्रत्ययस्येति भवत्येवेति भावः, केचित्तु सामान्यतो नकारोच्चारणेन तत्सामर्थ्यात्कुत्वाभावोऽनुमीयत इत्याहुः, तन्न क्रुङित्यस्यासिद्ध्यापत्तेः । उच्चारणार्थानामपि इत्संज्ञयैव निवृत्तिरिति सिद्धान्तेनाह—न तु तदिति । तस्य इकारस्य सा इत्संज्ञा. भाष्यविरोध इति तत्रहि अनुबन्धलोपे भावाभावयोर्विप्रतिषेधादप्रसिद्धिः 'न ज्ञायते केनाभिप्रायेण प्रसज्यति, केन निवृत्तिङ्करोतीत्याशङ्क्य भावेहि कार्यार्थो ऽनन्यार्थो लोपः कार्यङ्करिष्यामीत्यनुबन्ध आसज्यते, कार्यादन्यन्माभूदिति लोप' इत्युक्तम् । एतेन यस्योच्चारणार्थं उपदेशस्तस्योच्चारणे सहायकत्वात्प्रयोगे इत्संज्ञायाः सत्वेन निवृत्तेर्न्याय्यत्वादश्रवणम्भवतीति सूचितम् ।

"अव्ययी" ॥ समासान्त इति । समासस्य(१) समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः । तेनोपशरदमित्यत्र 'नाव्ययी-

रिति भाष्ये उक्तत्वाच्च । 'अन्त' इति सूत्रस्थभाष्येणोत्तरपदावयवत्व-

१ 'समासान्ताः' इत्यस्य समासस्य चरमावयवा इत्यर्थः । अत्र समासपदं समासार्थविग्रहवाक्यपरम् । तथा च समासार्थालौकिकविग्रहवाक्यान्तावयवा इति फलति । तेन बहुकुमारिकः' इत्यत्र गोस्त्रियोरिति ह्रस्वो न, समासात् प्राक् तत्समकालं वा समुदायस्याप्रातिपदिकत्वेन उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तश्च तदन्तसमासाभिन्नाजन्त प्रातिपदिकस्य ह्रस्व इत्यर्थकस्याप्राप्तेः कपि कृते स्त्रीप्रत्ययान्तत्वाभावात् । तदुक्तं भाष्ये कपि ह्रस्वस्य प्रतिषेधो वक्तव्यः । बहुकुमारीकः । न वक्तव्यः कपिकृतेऽनन्त्यत्वाद्ध्रस्वत्वं न भविष्यति । इदमिह सम्प्रधार्यं कप् क्रियतां ह्रस्वत्वमिति । परत्वात्कप् । समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप् समासान्त इत्युच्यते । तादर्थ्यात्ताच्छब्द्यं भविष्यति । येषां पदानां समासो न तावत्तेषामन्यद् भवति कपं नात्रप्रतीक्षते' इति । 'अन्तः' इति सूत्रे भाष्ये च किं समासस्यान्त उदात्त आहोस्विदुत्तरपदस्य । आद्ये 'इदम्प्रथमकाः' इत्यादौ कपि पूर्वस्योपसङ्ख्यानङ्कर्तव्यम् । अन्त्ये 'अनृचः' इत्यादौ 'नञ् सुभ्याम्' इत्यनेनान्त्याकारस्योदात्तत्वानापत्तिः ।' इत्युक्तम् । यदि समासे कृते समासान्तः प्रवर्तेत तदा 'इदम्प्रथमकाः' इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् 'बहुव्रीहाविदमेतद्भ्यः प्रथमपूरणयोः क्रियागणने' इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्पष्टैव । समासार्थालौकिकविग्रहवाक्यघटकोत्तरपदावयवाः समासान्ताः । अत एव सरूपसूत्रे भाष्ये कृतद्वन्द्वानां विभक्तौ परत एकशेष इति पक्षे "ऋक् च ऋक् च ऋचौ" "असारूप्यादेकशेषो न प्राप्नोति" इत्युक्तिः संगच्छते । ऋच्छब्दयोर्द्वन्द्वे कृते 'ऋक्पूरब्धूः' इत्यचि 'ऋच् ऋच औ' इत्यवस्थायामसारूप्यादेकशेषो नस्यादिति भाष्यार्थः । समासावयवत्वे द्वयोः शब्दयोः सारूप्यसत्त्वेन 'असारूप्यादेकशेषो न प्राप्नोति' इति भाष्यासङ्गतिः स्पष्टैवेत्याह 'समासार्थोत्तरपदस्य वा चरमावयव इति । अतएव 'द्विधुरी' 'द्विपुरी' इत्यादि सिध्यति । समासावयवत्वे तु उत्तरपदस्यादन्तत्वाभावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यस्याप्राप्त्या स्त्रीत्वं न स्यात् । नच समासान्तानामुत्तरपदावयवत्वे 'उपशरदम्' इत्यत्र अव्ययीभावस्यादन्तत्वाभावेन 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यमादेशानापत्तिः' 'अवयवावयवः समुदायावयवः' इति न्यायेनाव्ययीभावस्याप्यदन्तत्वेन तत्सिद्धेरिति प्राञ्चः । अत्र नव्याः 'समासान्ताः'

इत्यत्र 'तादर्थ्याताच्छब्द्यम्' इति भाष्यप्रामाण्यात् समासपदस्य समासार्थालौकिकविग्रहवाक्ये लाक्षणिकतया समुदायचरमावयवत्वमेव । अतएव 'अन्तः' इति सूत्रे भाष्ये समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये 'इदम्प्रथमकाः' इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वाऽन्त्ये 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा लक्ष्यानुरोधात्क्वचिदुत्तरपदान्तोदात्तत्वं क्वचित्समासान्तोदात्तत्वमित्युक्तिः संगच्छते । द्विपुरीत्यादौ समुदायस्य स्त्रीत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति 'समासान्ताः' इति सूत्रभाष्योक्त्या लिङ्गानुशासनस्य लोकसिद्धलिङ्गानुवादकत्वेन लोकादेव सिद्धिः । अत एव 'परवल्लिङ्गम्' इति सूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्द्धखारम्' इत्यत्र नपुंसकत्वस्य सिद्धिः । अतएव 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यत्र उत्तरपदग्रहणस्य 'पञ्चराजम्' इत्यादौ स्त्रीत्वाभावरूपं फलं संगच्छते । अतएव 'उपशरदम्' इत्यत्र 'नाव्ययीभावात्' इत्यम्, 'अव्ययानां भमात्रे' इति टिलोपाभावश्च सिद्ध', पूर्वभागस्याव्ययीभावत्वाभावेनानव्ययत्वात् । न च समुदावयवत्वे सरूपसूत्रस्थभाष्यविरोधः, समुदायावयवत्वे ऽपि तद्भाष्यविरोधाभावात् । तथाहि:— 'ऋक् च ऋक् च ऋचौ' असारूप्यादेकशेषो न प्राप्नोति' इति भाष्यम् । विभक्तौ परतः कृतद्वन्द्वानामेकशेष इति पक्षे समासान्त पूर्वभागस्य विभक्त्यव्यवहित पूर्वत्वाभावः । तद्विशिष्टस्य तु न सरूपत्वमित्युक्तम् भाष्ये 'असारूप्यात्' इति । किञ्चोत्तरपदावयवत्वे 'समासान्ताः' इत्यत्र समासपदस्य समासार्थालौकिकविग्र वाक्यघटकोत्तरपदे लक्षणायां लक्ष्यतावच्छेदके गौरवञ्चेत्याहुः । अन्ये तु 'ऋक् ऋक च ऋचौ' असारूप्यादेकशेषो न प्राप्नोति' इति भाष्ये एकशेषाप्राप्तौ 'ऋच' इत्यस्यानर्थकत्वरूपहेतोरनुक्त्योत्तरपदावयवत्वमेव । अन्यथा भाष्यस्य न्यूनतापत्तिः । उत्तरपदावयवत्वे तु 'ऋच' इत्यत्रार्थवत्त्वस्यैव सत्त्वेन न्यूनत्वाभावः । न च विशिष्टरूपोपादानाभावेन 'अर्थवद्ग्रहणे' इति परिभाषाया अप्राप्तया 'सरूपाणाम्' इति सूत्रेणार्थवतामेवैकशेष इत्यत्र प्रमाणाभावः, सहविवक्षायामेवैकशेषस्य प्रमाणसिद्धत्वेन समुदितार्थविषयकबोधतात्पर्येणोच्चरितानां सरूपाणामेवैकशेषोद्देश्यतावच्छेदकाक्रान्ततयाऽर्थवत्त्वाभावे च तद्व्याप्यस्य समुदितार्थबोधकत्वस्य सुतरामभावेन समुदितार्थबोधकत्वरूपव्याप्यधर्मेण हेतुना व्यापकस्यावयवार्थवत्त्वस्यानुमानेन तस्यैव प्रमाणत्वात् । अतएव 'काक्षः' इति बहुव्रीहौ 'कापथ्यक्षयोः' इत्यनेन षच्प्रत्ययान्तस्यार्थवत्त्वेन कादेशः सिध्यति । समुदायावयवत्वे तु अक्षशब्दस्यात्रानर्थकतया कादेशानापत्ति । न च प्रतिपदोक्तपरिभाषया षच्प्रत्ययान्ते कादेशाप्राप्तिः, प्रतिपदोक्तपरिभाषया 'कुगतिप्रादयः' इति विहितसमासे एव 'कोः कत्तत्पुरुषेऽचि' इत्यस्य प्रवृत्त्या समासान्तरे दोषाभावेन 'तत्पुरुषे' इत्यस्य चारिता-

यीभावात् इत्यम् द्विपुरीत्यादौ 'द्विगोः' इति ङीप् च सिध्यति। जराया इति। गणसूत्रम्। प्रतिपरेति। अक्ष्णः परमिति। अविषय इत्यर्थः। वृत्तिविषयेऽक्षिशब्द इन्द्रियमात्रपर:

---

पक्षस्य विरोधाच्च। सरूपसूत्रस्थभाष्यं( १ )तु समासावयवत्वपक्षेऽपि सुयोजं सुधियाम्। तद् ध्वनयन्नाद्यपक्ष एव फलद्वयमाह—तेनेति। अदन्ताव्ययीभावत्वप्रयुक्तोऽम्, अदन्तद्विगुत्वप्रयुक्तो ङीप् चेत्यर्थः। न च द्विपुरीत्यादावकारान्तोत्तरपदत्वाभावात् स्त्रीत्वं कथं स्यादिति वाच्यम्। लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चात्रान्यद्विगौ स्त्रीत्वाभावनियामकत्वाभावात्। तदुक्तं 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति 'समासान्ताः' इत्यादिसूत्रेषु भाष्ये। न चोत्तरपदावयवत्वेऽपि अवयवावयवस्य समुदायावयवत्वेनोक्तप्रयोगयोः सिद्धिरिति वाच्यम्। 'अन्त' इति सूत्रे समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये इदंप्रथमका

---

र्थयात्र प्रकरणे प्रतिपदोक्तपरिभाषाया अप्रवृत्तिकल्पनात्। उत्तरपदावयवत्वादेव 'अन्तरीपम्' इत्यत्र 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यनेनार्थवदपशब्दमादाय ईदादेशः सिध्यति। ईद्विधानसामर्थ्यादर्थवत्परिभाषायाअप्रवृत्तिकल्पनन्तु न युक्तम्, सामर्थ्यादप्रवृत्तिकल्पनापेक्षयोत्तरपदावयवत्वस्वीकारस्यैवौचित्यादिति वदन्ति। उपाध्यायास्तु समासान्ता समासावयवा एव, 'अन्तः' इति सूत्रे भाष्ये उत्तरपदस्यान्तोदात्तत्वपक्षे 'अनृच.' इत्यत्रान्तोदात्तत्वासिद्धिरूपदोषोक्तेः। अन्यथोत्तरपदावयत्वे चशब्दाकारस्योत्तरपदावयवतयोदात्तत्वसिद्धया भाष्यासङ्गत्यापत्तेः। किञ्चोत्तरपदावयवत्वे 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते' इति वार्तिके उत्तरपदग्रहणवैयर्थ्यापत्तिः, तत्फलस्य 'पञ्चराजम्' इत्यत्र स्त्रीत्वाभावस्य तत्सत्त्वेऽप्यशक्यवारणत्वात् 'सरूपाणाम्' इति सूत्रभाष्यासङ्गतेर्दुर्वारत्वात्। 'ऋक् च ऋक् च ऋचौ' इत्यत्र विरूपाणामपि समानार्थानाम्' इत्यनेनैकशेषस्य सिद्धतया भाष्योक्तैकशेपानापत्तिरूपदोषासङ्गत्यापत्तेश्च समुदायावयवत्वेन 'ऋच' इत्यस्यानर्थकतया 'विरूपाणाम्' इत्यस्या प्राप्तया नासङ्गतिः। किञ्च 'सरूपाणाम्' इत्यनेनार्थवतामेवैकशेष इत्यत्र प्रमाणाभावः, व्याप्त्येनसमुदितार्थवत्त्वेनावयवार्थवत्त्वस्य सत्त्वेऽपि अनुमितस्य तस्य 'सरूपाणाम्' इतिवाक्यार्थे प्रवेशाभावेनार्थवतामेवैकशेष इत्यस्य वक्तुमशक्यत्वात्। नचानर्थकस्यैकशेपे तेनार्थबोधानापत्तिः, 'यःशिष्यते' इति न्यायेन तद्बोधकत्वोपपत्तेरित्याहुरिति सुधियो विभावयन्तु।

समक्षमिति । अक्ष्णो योगम् ।

"नदी" ॥ इह स्वरूपस्यैव ग्रहणं न सञ्ज्ञायाः पौर्णमास्या-ग्रहायण्योः पृथग्ग्रहणात्(१) । उपनदीति । टजभावे नपुंसकह्रस्वः । इदं त्ववधेयम् । 'नदीभिश्च' इति सूत्रे विशेषाणामिव स्वरूपस्य ग्रहणं, विशेषाणामेवेत्यत्र मानाभावादित्युक्तम् । तेन पञ्चनदमिति सिध्यति । अत्र च नित्योऽच् । तदुक्तम्—

गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ॥ इति ।

एतच्च 'अच्प्रत्यन्वव' इत्यत्राजिति योगविभागात्सिद्धम् । पूजार्थमिति । अन्यतरस्याङ्ग्रहणस्य प्रकृतत्वादिति(२) भावः ॥

इत्यव्ययीभावः ॥

---

इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा अस्तु तर्ह्युत्तरपदस्येत्युक्त्वा तत्पक्षे ऽनृच इत्यत्रान्तोदात्तत्वासिद्धिरितीत्यर्थपरभाष्यविरोधेन तत्प-क्षस्याङ्गीकर्त्तुमशक्यत्वादित्यलम् । इन्द्रियमात्रपर इति । बाह्येन्द्रि-येत्यर्थः । सर्वबाह्येन्द्रियाविषये परोक्षत्वव्यवहारादिति भावः ।

न सञ्ज्ञाया इति । तत्संज्ञकस्येत्यर्थः । नपुंसकह्रस्व इति । उपलक्षण-मेतत् उपसर्जनह्रस्वस्यापि । तदुक्तमिति । माधवादिभिरिति भावः ।

---

१ नन्वनयोरुपादानं नियमार्थमस्तु 'ईकारान्तस्य चेदनयोरेव' इति चेन्न, 'ऊनदीपौर्णमासी' इत्येवसिद्धे नदीग्रहणस्य ज्ञापकत्वे बाधाभावात् । न च 'ऊ' इत्यस्य ग्रहणेऽनदीसंज्ञकानामप्यूकारान्तानां ग्रहणापत्तिः, नदीसाहचर्या-द्रूपदेनापि नदीसंज्ञकोकारान्तानामेव ग्रहणात् । नचास्यवैकल्पिकत्वेऽपि व्यवस्थित-विभाषात्वाश्रयणेन विपाट्शब्दान्ते नित्यप्रवृत्त्या नोक्तभाष्यविरोधः, तथात्वे 'देवत्रातः' इत्यादीनां व्यवस्थितविभाषाविषयत्वेन परिगणनपरभाष्यविरोधा-पत्तेरिति दिक् ।

२ 'वा' इति करणेनैव सिद्धे सेनकग्रहणं पूजार्थमपीतिभावः । अत एव 'नदीपौर्णमासी' इति सूत्रे नदीशब्देन विशेषाणामग्रहणे शारदादिषु विपाट् शब्दपाठस्य ज्ञापकत्वं संख्यासंज्ञासूत्रभाष्योक्तं संगच्छते । 'नदीपौर्णमासी' इत्यस्य वैकल्पिकत्वे तु नित्यत्वाय पाठस्यावश्यकतयाभाष्यासङ्गत्यापत्तेः । नचैव-मन्यतरस्यामित्यस्यात्रासम्बन्धे उत्तरत्र 'मय' इत्यत्राप्यसम्बन्धेनानेनैव शारदादि

'नदीभिश्च' इत्यत्र कैयटोऽप्येवम् (१)। परन्तु योगविभागसिद्धस्य सामान्यत्वेन विशेषेण 'नदीपौर्णमासी' त्यनेन बाधः कथं नेत्यत्र दृढं मानं फलं च चिन्त्यं तदेतत्तदुक्तमित्यनेन ध्वनितम् ॥

## इत्यव्ययीभावः ॥

---

झयन्ताव्ययीभावात् टचि सिद्धे शरदादिषु झयन्तपाठवैयर्थ्यम्, तत्रझयन्तपाठस्य प्रपञ्चार्थत्वादिति सेनकग्रहणस्य पूजार्थत्वं विकल्पार्थत्वञ्चोभयमपि फलमितिभावः।

१ 'नदीभिश्च' इति सूत्रभाष्यव्याख्यावसरे 'एकनदी' इति प्रतीकमादाय 'यदि समाहारग्रहणं न क्रियते तदा 'पुरस्तादपवादाः' इति न्यायेनायं समासः पूर्वकालैकेति समासं बाधेत समाहारे तु परत्वाद्द्विगुः स्यात्। ततश्चैकनदीत्यत्राव्ययीभावेकृते तन्निबन्धनो नदीपौर्णमास्याग्रहायणीभ्य इति वा टच् प्राप्नोति नपुंसकत्वञ्च। यत्तु गोदावर्याश्च नद्याश्चेत्यच् समासान्तः सोऽच् प्रत्यन्ववेत्यत्र योगविभागेन क्रियते। सचेष्टप्रसिद्ध्यर्थं इति तत्पुरुषे प्रयोगादर्शनादेकनदीत्यत्र न प्रवर्तते। अव्ययीभावेतु पञ्चनदमित्यत्र भवत्येवैकापूपीवत् समाहारविवक्षायामेकनदमेकनदीति भवतीत्याहु.' अत्र 'एकापूर्पावत्समाहारविवक्षायाम् 'एकनदम्' 'एकनदि' इति भवति इति चिन्त्यम् एकत्वसंख्यामादाय समाहारासम्भवादित्युपाध्यायाः।

यदीयशिक्षाव्रततिः प्रसूते तर्कप्रसूनं बुधमोदखेलम्।
समर्च्य रत्नप्रभया तदङ्घ्रि सभापतिर्नौति नतोऽनुवेलम् ॥

इति बलियाप्रान्तवास्तव्यसरयूपारीणसभापतिशर्मोपाध्यायविरचितायां मनोरमाशब्दरत्नटिप्पन्यां रत्नप्रभायामव्ययीभावप्रकरणम्।

॥ शङ्करोतु शङ्करः ॥

सुधियः प्रार्थये भूयः क्षन्तव्यास्त्रुटयो यदि।
सन्तोऽप्यसन्तो दोषाः स्युः प्रपञ्चोऽद्वैतिनामिव ॥

॥ इति शम् ॥

# शुद्धाशुद्धिपत्रम् ।

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ८ | टिप्पणी | ५ | पंन्थानम् | पन्थानम् |
| १० | टि० | १० | विशिष्टव | विशिष्टत्व |
| ११ | टि० | २ | भजस्य | भजस्व |
| १४ | टि० | १७ | उपशूरदम् | उपशरदम् |
| २१ | टि० | ७ | सास्यमाह | साम्यमाह |
| २३ | शब्दरत्न | ३ | तदाभिप्राय | तदभिप्राय |
| २६ | टि० | १४ | अवययित्वा | अवयवित्वा |
| २८ | टि० | १० | समुदायरूप | समुदायघटकरूप |
| ३१ | श० | ३ | किनतु | किन्तु |
| ३२ | टि० | १ | ज्याख्याता | व्याख्याता |
| ३८ | टि० | ६ | लृटः सद्वा | तौ सत् |
| ३८ | टि० | ६ | निष्ठा | क्त क्तवतू निष्ठा |
| ४७ | टि० | ३ | आपास्तम् | अपास्तम् |
| ४८ | टि० | ८ | चतुर्णा | चतुर्णाम् |
| ४८ | टि० | ६ | एव त अ | अतएव |
| ५१ | मूल | ४ | किमिविशेषेण | किमविशेषेण |
| ५२ | मूल | ६ | एकदेशस्तु | एकादेशस्तु |
| ५८ | श० | ३ | दीर्घाकारस्य | दीर्घकारस्य |
| ७६ | टि० | २१ | विधेयते | विधीयते |
| ,, | टि० | ,, | मात्राभार्थ | मात्रार्थ |
| ६१ | टि० | १४ | शाब्दात्वा | शाब्दत्वा |
| १०३ | टि० | ४ | अष्टादेशेकारा | अष्टादशेकारा |
| ११३ | श० | ४ | सूत्रेऽग्रह | सूत्रेऽणग्रह |
| ११६ | श० | ३ | इत्यरय | इत्यस्य |
| १२१ | टि० | ११ | बुद्धे | बुद्धौ |
| १३३ | टि० | ५ | स्थानि स्थानिवत्वेन | स्थानिवत्त्वेन |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| १३४ | टि० | १ | उभयानिमित | उभयनिमित्त |
| १४५ | टि० | ८ | यद्येकैकस्य | यद्येकैकस्य |
| १४७ | टि० | ५ | पस्तस्य | यस्तस्य |
| १४६ | टि० | ७ | वर्धी | वर्धी |
| १५० | टि० | ५ | प्राप्त्या | प्राप्त्या |
| १५५ | टि० | ८ | एतत्रिवेशे | एतन्निवेशे |
| १५५ | टि० | १४ | वारणापर | वारणपर |
| १५७ | टि० | ४ | नमित्तक | नैमित्तिक |
| ,, | टि० | ७ | उद्भिजा | उद्भिदा |
| ,, | टि० | २० | प्रास्येत्प्येवोक्त | प्राप्येत्येवोक्त |
| १६२ | टि० | ४ | द्वीवचन | द्विर्वचन |
| १६७ | मूल | ४ | साक्षाच्छ्रनर्न | साक्षाच्छ्रु तेन |
| १७६ | श० | ६ | जनो | जनौ |
| १६० | श० | ५ | वर्णद्वयापत्त | वर्णद्वयापेक्ष |
| १६७ | टि० | १ | पशधातोः | स्पशधातोः |
| ,, | ,, | ,, | यति | घञि |
| ,, | ,, | ,, | यथा | यया |
| २०८ | मूल | ८ | माणीवादीनां | मणीवादीनां |
| २०८ | मूल | ११ | वत्सरतौ | वत्सतरौ |
| २११ | टि० | १ | एकाज्रूयस्य | एकाजूरूपस्य |
| २११ | टि० | ४ | प्रत्ययस्यैनर्थवत्त्व | प्रत्ययस्यैवानर्थवत्त्व |
| २१७ | टि० | २ | पहुत्र | बहुत्र |
| २२१ | टि० | ४ | स्तेः | स्तोः |
| २२६ | टि० | २ | भवतति | भवतीति |
| २२७ | मू० | २ | संख्यस्येष्टत्वा | संख्यस्येष्टत्वात् |
| २३३ | श० | ४ | मननति | मननि |
| २४२ | मू० | ८ | ख्यातात्यत्र | ख्यातीत्यत्र |
| २४३ | श० | ३ | पुण्डरीकत्त | पुण्डरीकात्त |
| २५१ | टि० | १० | शास्त्रीस्थ | शास्त्रस्थ |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ,, | टि० | ३ | स्थानिनि | आदेशे |
| ,, | टि० | ४ | स्थानिनि | आदेशे |
| २५२ | टि० | ७ | संनिपातलक्षणे | संनिपातलक्षणो |
| २६३ | टि० | २ | साक्षाच्छास्त्राबाधा | साक्षाच्छास्त्रबाधा |
| | | | अथ अजन्तपुँल्लिङ्ग | |
| १० | टि० | ५ | समुदायस्या | समुदायस्य |
| १२ | श० | २ | पदस्येव | पदमिव |
| १२ | श० | ५ | अध्यागीष्ट | अध्यगीष्ट |
| १३ | श० | ५ | वोनित्य | वानित्य |
| १४ | श० | २ | परिभाषाया | परिभाषया |
| १५ | टि० | ११ | कुराड्ये | कुड्ये |
| २६ | टि० | ६ | भाष्येणव | भाष्येणैव |
| ३२ | टि० | १ | प्रकृतिप्रत्ययभावाना-पन्नत्वं | प्रकृतिप्रत्ययभावा-पन्नत्वं |
| ,, | टि० | १७ | उच्चारणाम् | उच्चारणम् |
| ३७ | टि० | ४ | एत् | ऐत |
| ४२ | श० | १ | एवच्च | एवञ्च |
| ४५ | टि० | २ | गोमत् अस् | चर्मन् अस् |
| ४७ | टि० | १ | परामर्शयोग्य | परामर्शायोग्य |
| ४७ | टि० | २ | आर्यिः | आर्यिके |
| ५० | टि० | मू० ६ | त्रीजि | त्रीणि |
| ५४ | टि० | ८ | वृकत्या | वृत्त्या |
| ५४ | टि० | १५ | सजाताय | सजातीय |
| ५४ | टि० | १५ | विभक्त्यव्यवहित | विभक्त्यव्यवहित |
| ५४ | टि० | १८ | कस्यपि | कस्यापि |
| ५५ | टि० | ७ | भाष्योक्तः | भाष्योक्तेः |
| ५८ | टि० | २ | पक्षा | पक्षो |
| ५६ | टि० | ५ | असंगत्यपत्तेः | असंगत्यापत्तेः |
| ६० | मूल | १ | देक | दैक |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ६० | टि० | १ | बाहुलकाद् | बाहुलका |
| ६१ | मू० | १ | मवम् | मैवम् |
| ६५ | टि० | ६ | अविर् रशब्दात् | अविश्शब्दात् |
| ६५ | टि० | ११ | काप्पि | कार्यि |
| ६५ | टि० | १६ | अन्तराङ्गा | अन्तरङ्गा |
| ६६ | टि० | ६ | स्थन्ले | स्थले |
| ६६ | टि० | ६ | पुवर्त्तेर्तति | प्रवर्ततेति |
| ६८ | टि० | ६ | नैकशंष | नैकशेष |
| ७४ | टि० | २ | प्रयगयाग्यता | प्रयोगयोग्यता |
| ७५ | मू० | ३ | परिनिष्ठिते | परिनिष्ठित |
| ७५ | टि० | ४ | पारे | परे |
| ७६ | टि० | ३ | दोपभाव: | दोषाभावः |
| ७७ | श० | २ | वत्यवि | वयवि |
| ७८ | टि० | ४ | अवच्छिन्नं | अवच्छिन्ने |
| ७८ | टि० | ७ | निहम्य | नियम्य |
| ७६ | टि० | ४ | रयाभ्याम् | रषाभ्याम् |
| ७६ | टि० | १६ | आध्यात् | आध्नोत् |
| ८० | टि० | ५ | वैमर्थ्या | वैयर्थ्या |
| ८२ | श० | ३ | नित्यमपि | नित्यमित्यपि |
| ८५ | श० | ३ | यजादौसर्व | यजादावसर्व |
| ६४ | मू० | ५ | पश्चाध्रिकास्त्रिशत् | पश्चाधिका त्रिंशत् |
| ६५ | मू० | ३ | लिङ्गस्य | लिङ्गस्य |
| ६६ | टि० | १ | नाभ | नोभ |
| ६६ | श० | ४ | विशेष्यक | मुख्यविशेष्यक |
| १०० | टि० | ४ | वाधतक | बोधजनक |
| १०० | टि० | १८ | विशिष्टं | विशिष्टे |
| १०० | टि० | १६ | बाधयति | बोधयति |
| १०१ | श० | ६ | सम्बोद्धयत्या | सम्बोद्धयत्वा |
| १०४ | टि० | ७ | संभवत | संभवती |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| १०५ | शा० | ३ | द्यवस्था | द्व्यवस्था |
| ११२ | शा० | ४ | प्रष्ठेत्यादो | पृष्ठ इत्यादौ |
| ११२ | टि० | २ | सध्यति | सिध्यति |
| ११२ | टि० | ४ | सत्यन्तु | सत्यान्तु |
| ११२ | टि० | ७ | तताञ्चि | ततोऽञ्चि |
| ११४ | मू० | ३ | सवदेः | सर्वादेः |
| ११४ | टि० | २ | प्रत्ययापत्तिः | प्रत्यापत्तिः |
| ११४ | टि० | ४ | प्रत्ययापत्ति्यस्था | प्रत्यापत्तीत्यस्यानुवृत्त्य |
| १२५ | मू० | ८ | ग्रहितुम् | ग्रहीतुम् |
| १३० | टि० | ४ | विघयान्वयेन | विधेयान्वयेन |
| १३२ | टि० | ३ | निमित्तिमत्पमदम् | निमित्तमत्पदम् |
| १५२ | शा० | २ | ज्ञापकात्वा | ज्ञापकत्व |
| १५८ | टि० | २ | राजान्त्र | राजात्र |
| १७० | टि० | १० | पियो | पिदियो |
| १७२ | टि० | ७ | इत्यत्र | इत्यन्यत्र |
| १७५ | टि० | १ | इत्यादावित्व | इत्यादावीत्व |
| १७६ | शा० | ८ | अनित्वा | अनित्यत्वा |
| १८३ | मू० | ३ | दीर्घेषु | न दीर्घेषु |
| १६५ | टि० | १० | ङ्गबाधक | लिङ्गबाधक |
| २०३ | टि० | २ | प्रातिपदिकने | प्रातिपदिकत्वे |
| २१६ | टि० | ७ | प्रामथ्यऽवकाश | प्राप्तयाऽवकाश |
| २१६ | टि० | १२ | विप्रतिषेधंन | विप्रतिषेधेन |
| २२३ | टि० | २ | विघातक | विघातक |
| २२३ | टि० | ३ | लो. | लोपः |
| २२४ | टि० | १ | लायस्य | लोपस्य |
| २२५ | टि० | २ | तस्त | तस्य |
| २३६ | टि० | १ | नशादादि | नैशादादि |
| २३६ | टि० | ७ | दकारात् रत्वं | दकारात्परत्वं |
| २३६ | टि० | ४ | प्रयाज्यविधयता | प्रयोज्यविधेयता |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| २४३ | टि० | ११ | तादवस्थ्य | तादवस्थ्यम् |
| २४३ | श० | १० | भूतर्व | भूतपूर्व |
| २४५ | टि० | ६ | अताप्यक | अनाप्यक |
| २४५ | टि० | २२ | नशहारका | नपहारका |
| २४७ | टि० | २ | त्यस्य | न्यस्य |
| २४७ | श० | ७ | बाधयितुम् | बोधयितुम् |
| २४७ | मू० | ६ | बाधयितम् | बोधयितुम् |
| २४८ | टि० | १ | भारोरैव | भीरोरैव |
| २४८ | टि० | ३ | अन्वाशश्च | अन्वादेशश्च |
| २४६ | श० | ४ | सात्मान्य | सामान्य |
| २५३ | टि० | २ | बोवनाय | बोधनाय |
| २५५ | श० | ७ | अच ॥ ति ॥ अजादि | अच ॥ अजादि |
| २५६ | श० | ३ | हलस्वरप्राप्तो | हलस्वरप्राप्तौ |
| २५६ | श० | ५ | धातारूपधा | धातोरूपधा |
| २५६ | टि० | ६ | बोधपितु | बोधयितु |
| २५८ | श० | ५ | सवगत्वेषु | सर्वगत्वेषु |
| २५६ | टि० | १ | वार्तिकारम्भस्येव | वार्तिकारम्भस्यैव |
| २६० | मू० | ५ | इत्यस्यारम्भत् | इत्यस्यारम्भात् |
| २७० | टि० | ४ | त्रयो | त्रपो |
| २७४ | मू० | ५ | समर्थमास | समर्थसमास |
| २७६ | श० | २ | प्रजभूभ्यादि | प्रजाभूभ्यादि |
| २७४ | मू० | २ | बोध्यनाम् | बाध्यताम् |
| २७६ | टि० | १ | कृतन्वानु | कृतान्वानु |
| २८० | श० | १ | बाध्यम् | बोध्यम् |
| २८१ | श० | ३ | विकृतयायेन | विकृतन्यायेन |
| २७६ | टि० | ६ | लक्षणयाम् | लक्षणायाम् |
| २८६ | मू० | ४ | ग्रन्थपादाय | ग्रन्थमुपादाय |
| २६१ | श० | ५ | लापस्य | लोपस्य |
| ३०२ | श० | ३ | शित्पामत्यर्थः | शित्त्वमित्यर्थः |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ३२५ | टि० | ३ | परमममीति | परसममीति |
| ३२५ | टि० | ५ | नेपातो | नेपरतो |
| ३३३ | श० | २ | व्यतिरिक्तते | व्यतिरिक्तमते |
| ३४२ | टि० | २ | ङीपोभवाय | ङीपोऽभावाय |
| ३४६ | टि० | ६ | अभीरार्थक | आभीरार्थक |
| २४६ | टि० | ७ | प्रयोजत्रत्वात् | प्रयोजकत्वात् |
| ३४६ | टि० | ८ | ध्यति | सिध्यति |
| ३४६ | टि० | ११ | तत्रहत्पूर्वेति | तत्रामहत्पूर्वेति |
| ३४८ | मू० | ४ | यथोद्धेशं | यथोद्देशं |
| ३६१ | मू० | १० | पुत्रादः | पुत्रादेः |
| ३६६ | टि० | ९ | त्ययार्थः | प्रत्ययार्थः |
| ३६६ | टि० | १० | प्रकाता | प्रकारता |
| ३६६ | टि० | १२ | त्ययः | प्रत्ययः |
| ३८२ | मू० | १ | त | ति |
| ३८५ | मू० | ३ | निकपानाम् | विकल्पानाम् |
| ३९४ | मू० | ८ | काभशब्द | करभशब्द |
| ३९७ | मू० | २ | यदुक्ताथवत्व | यदुक्तयवत्व |
| ३९९ | मू० | ५ | प्रत्ययथात् | प्रत्ययस्थात् |
| ३९९ | श० | ३ | पुमसं | पुमासं |
| ४०० | मू० | ६ | कैयहरदत्त | कैयटहरदत्त |
| ४०२ | श० | ४ | डप्प्रत्यये | डाप्प्रत्यये |
| ४१३ | टि० | १९ | धनिना | धर्मिता |
| ४१३ | टि० | २२ | स्वस्वनि | स्वस्वामि |
| ४१८ | टि० | ७ | नादयात् | नोदयात् |
| ४१८ | टि० | १० | स्वाश्रयावच्छि | स्वाश्रयावच्छिन्न |
| ४२६ | टि० | १ | स्मर्थः | समर्थः |
| ४२६ | टि० | २ | वकय | वाक्य |
| ४२७ | टि० | १ | विषया | विषयो |
| ४२८ | टि० | ७ | सात्तत्परं | सात्तात्परम् |
| ४३० | टि० | ७ | नोलघटो | नीलोघटो |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
| --- | --- | --- | --- | --- |
| ४३१ | टि० | ५ | नन्वयः | नान्वयः |
| ४६६ | टि० | ५ | संख्यान्वयि | संख्यानन्वयि |
| ४७० | मू० | ४ | गङ्गादे | ग्रामादे |
| ४७४ | श० | २ | विषयत्वयोः | विषयत्वयोरित्यर्थ |
| ४७४ | श० | ३ | प्रकर्षस्येत्यर्थः | प्रकर्षस्यसंग्रहः |
| ४७६ | श० | ५ | नवाधार | नत्वाधार |
| ४७६ | श० | ७ | आधारस्य | आधारत्वस्य |
| ४७६ | श० | ७ | नानन्ता | त्वनन्ता |
| ४८१ | टि० | ७ | तच्चाङ्गतम् | तच्चासङ्गतम् |
| ४९१ | श० | ३ | स्योचित्यात् | स्यौचित्यात् |
| ४९४ | टि० | ८ | पऽनेन | पराऽनेन |
| ४९५ | टि० | १३ | प्रतात्या | प्रतीत्या |
| ५०९ | टि० | १६ | वीसा | वीप्सा |
| ५४१ | टि० | ७ | वषयक | विषयक |
| ५६१ | मू० | २ | विशंषणा | विशेषणा |
| ५६४ | मू० | ५ | त्यूच | त्यूचु |
| ५७० | मू० | ३ | नापू | नापूर्वा |
| ५७० | मू० | २ | करणं | करणे |
| ५७० | मू० | ६ | कालं | काले |
| ५७० | मू० | ७ | निवृत्तफल | निवृत्तिफल |
| ५७६ | मू० | २ | ममानाधिकरणं | समानाधिकरणं |
| ५७६ | मू० | ३ | ममुच्चयार्थम् | समुच्चयार्थम् |
| ५७६ | मू० | ४ | विप्रकृष्टा | विप्रकृष्टापि |
| ५७६ | मू० | ४ | पञ्चमी | पञ्चमी |
| ५८६ | श० | ५ | साव | सार्व |
| ५८४ | मू० | ५ | इक्ष्वाकुणां | इक्ष्वाकूणां |
| ६०० | टि० | ४ | शब्दन | शब्देन |
| ६०० | टि० | १० | गनघ्यं | गन्तव्यं |
| ६०१ | टि० | ३ | विभक्तपद्यो | विभक्त्याद्यो |

| पृष्ठ | शब्दरत्न मूल टिप्पणी | पङ्क्ति संख्या | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ६०१ | टि० | ८ | मङ्गतिः | सङ्गतिः |
| ६०२ | टि० | १४ | द्यातकत्वे | द्योतकत्वे |
| ६०३ | टि० | १ | अवभंक्ष | अब्भक्ष |
| ६०३ | टि० | २ | अयष्व | अप एव |
| ६०३ | टि० | ११ | विशिप्न | विशिष्य |
| ६०६ | टि० | १८ | तस्यू | तस्य |
| ६०६ | टि० | २१ | अदृश्ये | असादृश्ये |
| ६०७ | टि० | १६ | अमहंभवामि | अनहंभवामि |